योगः कर्मसु कौशलम्

AHNIK VARTA PATRAM

Email - ahnikvartapatram@gmail.com

# आह्निक वार्ता पत्रम्

RNI No. : UPSAN/2018/76680

वर्ष-3 अंक 266 संस्कृत दैनिक/ प्रात; संस्करण | प्रयागराज 21 जुलाई 2021 बुधवार | पृष्ठ-4 | मूल्य- 2 रुपये

## सुभाषितम्

पिपीलिकार्जितं धान्यं
मक्षिकासञ्चितं मधु ।
लुब्धेन सञ्चितं द्रव्यं समूलं
हि विनश्यति ॥

अर्थ। चींटी द्वारा इकट्ठा किया गया अनाज, मक्खी द्वारा जमा किया गया शहद, और लोभियों द्वारा संचित किया गया धन, समूल ही नष्ट हो जाता है।

## संक्षिप्तवार्ता:

### अफ्गाने पाकिस्थानीय तालिबानेन भारतीय चिह्नानां विनाशनम् आलक्ष्यते



**नवदेहली।** अफ्गानिस्थाने भारतनिर्मितवस्तूनां नाशं लक्ष्यीकर्तुं तालिबाने सम्मिलितान् पाकिस्थानस्य योद्धृन् प्रति निर्देशः अदात। पाकिस्थानस्य गुप्तचरसंघटनेन ऐ एस् ऐ ( inter services intelligence)दलेन निर्देशो दत्तः इत्यस्ति आवेदनम्। अफ्गानिस्थानदेशस्थस्य भारतीयचिह्नानां नाशनमेव लक्ष्यम् इति वार्ताप्रतिनिधि संघेन आवेदितम्। गतद्विदशकाभ्यन्तरे भारतीयसर्वकारेण अफ्गानिस्थानस्य पुनर्निमाणाय त्रि अर्बुदं (बिल्यन् ) डोल ँधनं व्ययीकृतम् आसीत्। डेलारामस्थे सरञ्च् सल्म सेतोः च मिथः 218 किलोमीट्ट यानमार्गस्य कृते भारतेन निक्षेपः कृतः। 2015 तमे वर्षे उद्घाटितं विधानसभा गृहं अफ्गान जनतायाः कृते भारतस्य योगदानस्य अमूल्य प्रतीकं भवति।

### पर्यावरणे व्यत्ययः- उत्तरध्रुवे असाधारण घटनारूपेण वातः सौदामिनी च

**नवदेहली।** वैज्ञानिकान् अत्भुतपरतन्त्रान् कृत्वा उत्तरध्रुवे असाधारण-घटनारूपेण वातः सौदामिनी च। ईदृशीघटना इतः पूर्वं न आसीत् इति वैज्ञानिकैः उच्यते। प्रायेण उत्तरध्रुवे सैदामिन्याः वातस्य च सन्दर्भः नास्ति। पर्यावरणव्यत्ययेन अन्तरिक्षे तापः वर्धितः इत्यनेन भवति ईदशी दुर्घटना इति ते अभिप्रयन्ति।
सेबीरियातः अलास्क पर्यन्तं दीर्घितम् उत्तरध्रुवं सामान्येन हिमावृतं भवति। तत्र सैदामिनेः साध्यतालेशोऽपि नास्ति। किन्तु 2010 संवत्सरादारभ्य ग्रीष्मकाले सौदामिनिप्रभावः दृश्यते। इदानीम् अस्याः शक्तिः व्याप्तिः च वर्धिते स्तः। अन्तरिक्षे तापः वर्धितः इत्यनेन विद्युद्प्रवाहक्षमा अभवत् वायुः इति वैज्ञानिकाः वदन्ति। वर्तमाने अस्मिन् संवत्सरे सैबीरियायां वनाग्निकारणेन ग्रीस् देशात् विस्तृतः भूप्रदेशः भस्मसात् अभूत्। सैबीरिया इदानीं पर्यावरण उष्णबिन्दुरूपेण परिवर्तते इति ग्रीन् 'पीस् रष्यया' आवेदितम।

उत्तरप्रदेशस्य 92185 संख्यकेभ्यः महिला श्रमिकेभ्यः प्राप्तः मातृत्वशिशुबालिकायोजनायाः लाभः

# महिलाश्रमिकेभ्यः मातृत्वहितलाभं दातुम् उत्तरप्रदेश सर्वकारः प्रथमः



**28/12/2018 तः 30/06/021 पर्यन्तं 1,50,62,31,864 रुप्यकाणां धनराशियोजनां प्रति कृतः व्ययः**

**बालके जाते सति 20,000 रुप्यकाणां बालिकायां च सत्यां 25,000 रुप्यकाणां धनराशिः दास्यते**



**लखनऊ।** महिलानां पुत्रीणां च सुरक्षा, स्वावलम्भनं तासाम् आत्मसम्मानं वर्धमानेन योगिसर्वकारेण कार्यकाले महिला श्रमिकेभ्यः सर्वाधिकं मातृत्व हितलाभं प्रदातुं कार्यं कृतम् । सर्वकारेण प्रदेशे मातृत्व शिशुबालिका योजनान्तर्गतं 28/12/2018 तः 30/06/021 पर्यन्तं 92185सङ्ख्यकेभ्यः महिलाभ्यः 1, 50, 62, 31, 864 रुप्यकाणां धनराशिः व्ययीकृतः । योजनान्तर्गतं बालके जाते सति एकमुश्त 20,000 रुप्यकाणां बालिकायां च सत्यां 25,000 रुप्यकाणां धनराशिः प्रदत्तः ।

प्रदेश सर्वकार पक्षतः सञ्चालित योजनान्तर्गतं महिला श्रमिकेभ्यः मातृत्वसुखं तु प्राप्तं, साकमेव आर्थिक लाभेन तासां स्वप्नाः अपि परिपूरिताः । योजनान्तर्गतं संस्थागत प्रसवस्थित्यां निर्धारित न्यूनतम वृत्ति मूल्यस्य प्रतिशतात्रि मासस्य वृत्ति मूल्यस्य समरूपं धनराश्या सह एकसहस्ररुप्यकाणां चिकित्सा अधिलाभः दीयते। पञ्जीकृत निर्माण श्रमिकस्य अधिकतमं द्वे नवजात शिशुभ्यः पौष्ट काहारस्य सहायता प्राप्यते। उत्तरप्रदेश भवने अन्यस न्निर्माण कर्मकार कल्याण परिषदि पञ्जीकृत पुरुष श्रमिकस्य भार्यया बालके जाते सति एकमुश्त 20,000 रुप्यकाणां बालिकायां च सत्यां 25,000 रुप्यकाणां धनराशिः प्रदीयते । परिषदि पञ्जीकृत महिला श्रमिकेभ्यः बालके बालिका च जाते सति एषा धनराशिः प्रदीयते । पुरुष कामगार पक्षतः आवेदनं कर्तुं तेषां सहचारिभ्यः मातृत्वहित लाभस्वरुपे षड्सहस्ररुप्यकाणां धनराशिः प्रथमावृत्तिः दीयते या पूर्वं द्वयारावृत्तिः दीयते स्म ।

प्रदेशे योगिसर्वकारे सत्तारूढे सति पूर्वं सञ्चालितस्य मातृत्वहित लाभ योजनान्तर्गतं द्विसहस्रसप्तदश वर्षारभ्य अप्रैल मासस्य द्विसहस्रविंशति वर्षस्य मार्चमासपर्यन्तं 5,96,712,785रुप्यकाणां धनराश्या 61535सङ्ख्यकेभ्यः लाभार्थिभ्यः लाभः प्रापितः । यद्यपि शिशुहित लाभ योजनायां द्विसहस्रविंशति वर्षस्य मार्चमास पर्यन्तं 1,32,36,32,000रुप्यकाणां धनराशिं व्ययीकृत्य 102129सङ्ख्येभ्यः लाभार्थिभ्यः साक्षात् लाभः प्रापितः । बालिका सहायता योजनान्तर्गतं द्विसहस्रविंशति वर्षस्य मार्चमास पर्यन्तं वर्तमान सर्वकारेण 8912सङ्ख्यकेभ्यः लाभार्थिभ्यः 17,23,01,005रुप्यकाणां धनराशिलब्धेः कार्यं कृतम् । गतसर्वकाराणाम् अपेक्षया योगिसर्वकारे श्रमिकेभ्यः सर्वाधिकलाभं प्रदातुं कार्यं कृतम् । येन तेषां जीवने निरन्तरम् उन्नतिः आगता । तेषाम् आर्थिक स्थितेः सुदृढेन सहैव सामाजिक सुरक्षायाः अपि लाभः प्राप्तः ।

## संसदः मानसून सत्रे 23 महत्वपूर्णं विधानानि प्रस्तुतानि भविष्यन्ति




**नवदेहली।** संसदः मानसूनसत्रस्य प्रथमदिवसः विपक्षिदलाभिः कोलाहलपूर्ण वातावरणे सति अवरूद्धः जातः। एतद् पूर्वं प्रधानमंत्री नरेन्द्र मोदी उक्तवान् यत् लोकतंत्रस्य परम्परानुसारेण जनैः संयुक्तान् प्रकरणान् सौहार्द पूणविधिना उत्थापयेत्। किन्तु सत्रस्य प्रारम्भे एव लोकतंत्रस्य परम्परा पालने विपक्षि दलः विशेषकरः कांग्रेस, तृणमूल कांग्रेस, वाममोर्चा इत्यादयस्य दलानां राजनेतारः असफलाः जाताः। उल्लेखनीयः यत् अस्मिन् सत्रे 23 महत्वपूर्ण विधानानि प्रस्तुतानि भविष्यन्ति। प्रधानमंत्री संसदिस्वस्थविचार विमर्शस्य आह्वानम् कृतवान् तथा सर्वेषां दलानांनेतृभिः सहयोगस्य अपेक्षां अकरोत्।

## उत्तराखण्डे मेघविस्फोटे त्रयः नागरिकाः मृताः, चत्वारः जनाः अप्रत्यक्षाः अभवन्



**देहरादून।** उत्तराखण्डे मेघविस्फोटेन जातेन अतिवर्षेण जलोपप्लुवेन च त्रयः नागरिकाः मृताः। चत्वारः जनाः अप्रत्यक्षाः अभवन। उत्तरकाशीजिल्लायामेव दुरन्तः जातः। अतिवर्षेण माण्डो ग्रामे बहूनि भवनानि जले निमग्नानि। अप्रत्येक्षु द्वौ स्त्रियौ, एकः पुरुषः, एकः शिशुः च अन्तर्भवन्ति इति राज्य-आपदा- प्रतिक्रिया-सेनायाः (State Disaster Response Force) निरीक्षकेन जगदम्बा प्रसादेन प्रोक्तम्। अपघातप्रदेशे रक्षाप्रवर्तनानि अनुवर्तन्ते। उत्तरखण्डे जूलाय् 21 तमदिनपर्यन्तं अतिवृष्टिः भविष्यति इति पर्यावरणनिरीक्षककेन्द्रेण पूर्वसूचना दत्ता। पश्चिमतीरे जूलाय् 23 तमपर्यन्तं अतिवृष्टिः भविष्यति। गतसप्ताहे उत्तरकाश्यां अतिवृष्टिकारणेन जातस्य मृत्स्खलनेन राजमार्गे गमनागमनं रुद्धमासीत्।

## विश्वप्रसिद्धा बाहुडायात्रा



**नन्दप्रदीप्तकुमारः/ पुरी।** विश्वप्रसिद्ध-बाहुडायात्रा निर्विघ्नेन समापयितुं समीक्षा सभा समनुष्ठिता। श्रीमन्दिरमुख्य-प्रशासकस्य क्रिषन कुमारस्य अध्यक्षतया नीलाद्रिभक्तनिवासे इयं सभा अभवत्। अन्ये प्रशासनिका अधिकारिण अस्यां सभायां समुपस्थिता आसन्। बाहुडायात्रा, सुवर्णवेश तथा नीलाद्रिबिजे सम्बन्धीया आलोचना विस्तृत भावेन अभवत्। गुण्डिचामन्दिरे सप्तदिनानि उषित्वा चतुर्धा मूर्तयः स्वस्थानं नीलाद्रिमण्डपं प्रत्यावर्तनं करिष्यन्ति। महामारीकारणात् भक्तैर्विना समस्तकार्याणि संपादयितुं श्रीगुण्डिचावत् नीति-नियमाः समय-निर्घण्टश्च स्थिरी कृताः। सर्वसाधारणानां भक्तानां जनसाधारणानां च कृते पुरीक्षेत्रं निषिद्धाञ्चलः उद्घोषितः। अद्यारभ्य 21 तारिखपर्यन्तं पुर्यां 144 धारा बलवत्तरा संजाता। केवलं दूरदर्शनमाध्यमेन भक्ताः बाहुडायात्रां, सुवर्णवेशं द्रष्टुं समर्था भविष्यन्ति ।

## देहल्यामपि कॉवड़ यात्रायां अवरोधः



**नवदेहली। उत्तर प्रदेशः उत्तराखण्ड योरनन्तरे इदानीं राजधान्यां देहल्यामपि कॉवड़ यात्रायाः उपरि अवरोधः प्रयुक्तः। सर्वकारेण गृहीत निर्णयानुसारेण कोरानां पश्यन् देहल्यां कॉवड़ यात्रायाः आयोजनं नैव भविष्यति।**

## केन्द्रीय रेलविद्युतीकरण संगठनस्य क्षेत्रीया राजभाषा कार्यान्वयन समितेः संगोष्ठी समायोजिता

**प्रयागराजः।** केन्द्रीय रेलविद्युतीकरण संगठनस्य प्रयागराजे महाप्रबन्धकस्य श्री यशपाल सिंहस्य अध्यक्षतायां राजभाषा कार्यान्वयन समितेः सर्वाभिः रेलविद्युतीकरण परियोजनाभिः सहवर्चुअल संगोष्ठी सम्पन्ना जाता। यस्यां महा प्रबन्धकेन अध्यक्षीय सम्बोधने ग क्षेत्रस्य परियोजनासु भव्यमानेसु हिन्द्याः प्रचार प्रसारस्य सद्कार्याणां प्रशंसा कृताअथ च क एवं च ख क्षेत्रयोः स्थितान् कार्यालयान् हिन्द्यां शतप्रतिशतं कार्यंकर्त्तुं आदिशत्। सः सर्वासां परियोजनानां निर्धारितस्य अर्थ संकल्पस्य शतप्रतिशतं उपयोगं सुनिश्चेतुं अपिनिर्देशितवान्। प्रचलितैः शब्दप्रयोगैः राजभाषायाः प्रयोग प्रसार सम्वर्द्धनाय बलमददत्। एतत् पूर्वंमुख्य राजभाषा अधिकारी एवं च प्रमुखः मुख्यः संकेतकः दूर संचारस्य च अभियन्ता श्रीसुरेश कुमारः उपस्थितानां अतिथीनाम् स्वागतं कुर्वन् अकथयत् यत् न केवलं मदीये संगठने अपितु सम्पूर्णे भारतीय रेल विभागे राज भाषायाः प्राचुर्येण प्रयोगः भवति। अवसरेस्मिन् महाप्रबन्धक महोदयेन रेलवे परिषदः नकद पुरस्कार योजनान्तर्गते अधिकारिणां अन्ये च राजभाषा प्रचाकरकानाः सम्मानमपि आकारितम्। अस्यांवर्चुअल संगोष्ठ्यां मुख्य परियोजना निदेशकः उपमुख्य रजभाषा अधिकारिणः कोर मुख्यालयश्च सर्वेषां विभागानाम् सम्पर्क अधिकारिणः सम्मिलिताः बभूव।

## शबरिगिरि मन्दिरे प्रतिदिनं 10000

**पत्तनंतिट्टा/केरलम।** कर्कटक-मासपूजावेलायां शबरिगिरि-मन्दिरे प्रतिदिनं 10,000 भक्तेभ्यः प्रवेशाय अनुमतिः। मन्दिर द्वारोद्घाटन वेलायां जूलाय् 21 दिनपर्यन्तं प्रनिदिनं 10,000 भक्तेभ्यः भगवद्दर्शनाय अनुमतिः प्रदत्ता। द्वारा एव प्रवेशनम्। दर्शनाय आगताः भक्ताः 48 होराभ्यन्तरे गृहीतं कोविड् आरटिपिसिआर रोगनिर्णयस्य अभावात्मक प्रमाण पत्रम् अथवा वाक्सिनस्य पूर्णमात्रा स्वीकृत प्रमाण पत्रं वा नेतव्यमस्ति।




## सिद्धूमहाभागस्य नाम्निप्रियंकागान्धिनः मुद्राः अन्येषु राज्येषु अपिदृष्टि गोचरो भविष्यति

**नवदेहली।** सिद्धू महाभागस्य नाम्निप्रियंकागान्धिनः मुद्राः अन्येषु राज्येषु अपिदृष्टिगोचरो भविष्यति, कांग्रेसस्य पंजाब मॉडलस्य प्रभावः। अनेन निर्णयेन गांधीकुटुम्ब दलस्य सवीच्च नियन्तारूपे स्व अस्तित्वंपुनः सवीच्च प्रमाणितं चकार यत् सततं निर्वाचने पराजयेन प्रभूतं दुर्बलं दृष्टिगोचरी अभवत्। अस्य पंजाब मॉडलस्य प्रभावः न केवलं पंजाबे एव अपितु अन्येसु राज्येस्वपिद्रष्टुं शक्यते।

## सम्पादकीयम्

### भारतं सदैव शरणागतानां परिपालकः

भारतं सदैव शरणागतानां परिपालकः आसीत्। अद्यापि इयं परम्परा विद्यमाना। आधुनिकी सन्दर्भेऽपि शरणागतानां स्वरूप वैविध्यं भवितुं शक्यते। प्रवासिनः अपि शरणागतः भवितुं शक्यते वैदिशिकाश्चापि शरणगतश्रेण्याम समाहिताः भवन्ति। तेषां समेषां सहाय्यं कर्तुम् परम्परा वैदिककालादेव अद्यावधिपर्यन्तं प्रचलत्येव। उत्तमस्यापि वर्णस्य नीचोऽपि गृहमागतः। तस्य पूजा विधातव्या सर्वदेवमयोऽतिथि।। अर्थात् उत्तम से उत्तम वर्ण के यहाँ भी कोई अतिथि वह चाहे कितना भी नीच हो यदि आये तो उसकी पूजा करनी चाहिए। कहा भी है- **अतिथिर्धर्मरूपेहि गृहस्थाना गृहे गृहे।** ‘अतिथिसत्कारः केवल शिष्ट पुरुषों की परम्परा के कारण अनुवर्तनीय नहीं है अपितु इसके न करने से नाना प्रकार की हानियाँ हो सकती हैं। यह स्वयं कठोपनिषद् में लिखा है-

**वैश्वानरः प्रविशत्यतिथिर्ब्राह्मणो गृहान्।**
**तस्यैताँशान्तिं कुर्वन्ति हर वैवस्वतोदकम्।।**

# ‘अपूजयित्वा रङ्गं तु नैव प्रेक्षां प्रवर्तयेत्’

भरतमुनेः नाट्यशास्त्रमिति नाट्यशास्त्रस्य प्राचीनतमः प्रामाणिकश्च ग्रन्थः। नाट्यसम्बन्धिनः प्रायशः सर्वे विषयाः ग्रन्थेऽस्मिन् चर्चिताः। भरतमुनिना नाट्यगृहस्य सूक्ष्मातिसूक्ष्मं विस्तृततञ्च विवरणं नाट्यशास्त्रस्य द्वितीयाध्याये कृतम्। वर्णनेनानेन ज्ञातुं शक्यते यद् भरतमुनेः पूर्वं नाट्यकला प्रगतावस्थायामासीदिति। नाट्यपरम्परेयं वेदकालादारभ्य प्रवर्तिता ! यज्ञसमये संवादसूक्तानांसाभिनयपठनमाख्यानानां च साभिनयकथनमेव नाट्यस्य पूर्वरूपम्। अत उत्सवप्रसङ्गे नाट्यप्रदर्शनस्य परम्परा प्रवर्तिता। रामायणे अश्वमेध यज्ञप्रसङ्गे लवकुशाभ्यां रामकथा श्राविततेति प्रसिद्धमेव1 महाभारते हरिवंशपुराणे प्रद्युम्नविवाहप्रसङ्गे वासुदेव कृपानु-ष्ठितेऽश्वमेधयज्ञप्रसङ्गे एकेन नटेन नाट्यप्रदर्शनं कृतमिति वर्णनं प्राप्यते। भरतमुनिना प्रथमनाट्यप्रयोगः इन्द्रध्वजोत्सव प्रसङ्गे कृतः। प्रयोगोऽयं कैलासपर्वते कृतं स्यात्। यतो हि शङ्करस्य ताण्डवं पार्वत्याः लास्यञ्च तत्रैव प्रवर्तते स्म। कैलासशब्दस्य व्युत्पत्तिरपि तदेव दर्शयति। केलीनां समूहः कैलं तेन आस्यते स्थीयते इति कैलासः विश्वकर्मणा तत्रैव प्रथमं नाट्यगृहं कृतं स्यात्। भरतमुनिना नाट्यगृहस्य निर्माणं किमर्थमादिष्टम् प्रश्नस्यास्योत्तरं नाट्यशास्त्रस्य प्रथमाध्याये प्राप्यते। तत्र भरतेन नाट्योत्पत्तिर्वर्णिता। क्रीडनीयकमिच्छाम इति इन्द्रादिदेवानां प्रार्थनामनुसृत्य ब्रह्मणा चतुर्भ्यो वेदेभ्यो चतुरांऽशान् गुहीत्वा पञ्चमो नाट्यवेदः निर्मितः। परं तस्याधारेण नाट्यनिर्मितिः कथं कर्तव्येति देवैरसमर्थता प्रकटिता। तदा भरतमुनिना नाट्यवेदस्याध्ययनं कृत्वा स्वशिष्यैः सह त्रिपुरदाहम मृतमन्थनं च नाट्यप्रकारद्वयं देवानां पुरतो अभिनीतम्। नाट्यप्रकारद्वयेऽप्यसुराणां विनाशं दृष्ट्वा कृद्धैस्तैर्विघ्नानुत्पाद्य प्रयोगोऽयं स्थगयितः। तदा भरतमुनिः ब्रह्माणं प्रार्थितवान्। ‘अस्य रक्षाविधिं सम्यगाज्ञापय सुरेश्वर।’ भरतमुनेः प्रार्थनां निशम्य ब्रह्मणा विश्वकर्मा आदिष्टः। ततश्च विश्वकर्माणं ब्रह्मोवाच प्रयत्नतः। कुरु लक्षणसम्पन्नं नाट्यवेश्म महामते। ब्रह्मण आदेशं प्राप्य विश्वकर्माणा नाटयगृहं निर्मितम्। ‘अंशभागैर्भवद्भिदिस्तु रक्ष्योऽयं नाट्यमण्डपः’ इति ब्रह्मा सर्वान्सुरान्प्राह। नाट्यक्षणार्थं निर्विघ्ननाट्यप्रयोगार्थञ्च नाट्यगृहस्य निर्माणभवदिति कथया अनया ज्ञायते। अतः भरतमुनिना प्रथमाध्याये उक्तम्- ‘अपूजयित्वा रङ्गं तु नैव प्रेक्षां प्रवर्तयेत्’ एतं सूत्रं गृहीत्वैव द्वितीयाध्याये नाट्यगृहस्य निर्माणविधिर्पूजाविधिश्च भरतमुनिना सविस्तरं वर्णितः। नाट्यगृहस्य नवप्रकाराः भरतेन वर्णिताः एतेषु प्रकारेषु मध्यमायताकृतिर्विकृष्टः नाट्यमण्डपस्तु योग्य इति उक्तम्- प्रेक्षागृहाणां सर्वेषां तस्मान्मध्यममिष्यते। यावत्पाठ्यञ्च गेयञ्च तत्र श्रव्यतरं भवेत्। मानवानां कृते एतदेव योग्यं नाट्यगृहम्। एतादृशनाट्यगृहे संस्कृतनाटकानि भवन्ति स्म। परमेतादृशं नाट्यगृहं भारतवर्षे नाद्यावधिर्प्राप्तं कुत्रापीत्याश्चर्य कारकं खलु। अश्वघोषतः राजशेखरपर्यन्तं सहस्त्रवर्षेषु नाट्यलेखनमविरतं प्रचलितम्। प्रयोगप्रधानं हि नाट्यमिति कालिदासेन मालविकाग्निमित्रे उक्तमस्ति। मनोरञ्जनमेव नाट्यस्य प्रधानं प्रयोजनम्। अतः नाट्यप्रकाराणां प्रयोगाः भवन्ति स्म इत्यत्र नास्ति संशयलेशः। रामगढ़स्थायां सीताबेंगागुहायां दृश्यते नाट्यगृहस्य स्वरूपमिति केचन विद्वांसः वदन्ति। दक्षिणभारते केरलप्रदेशे भरतनिर्दिष्ट नाट्य गृहसदृशं प्रेक्षागृहं लभ्यते। तत्र कुडिआट्टम शैल्यामनवरतं संस्कृतनाटकानां प्रयोगाः भवन्ति। परं तत्रापि भासस्य नाटकानां प्रयोगाः बाहुल्येन भवन्ति। भासस्तु भरतस्य पूर्ववर्ती। अतः भरतोक्तनाट्यगृहस्य स्वरूपं तत्रापि पूर्णांशेन द्रष्टुं न पारयामः वयम्। भासादनन्तरमपि सुदीर्धा नाट्यप-रम्परा। तर्हि किमर्थं न लभ्यते एतादृशं नाट्यगृहमिति चिन्तनीयः विषयः। यात्राप्रसङ्गेऽस्थायिरूपेण नाट्यगृहाणां निर्माणं कृत्वा नाट्यप्रयोगाः भवन्ति स्म। अतः नोपलभ्यन्ते नाट्यगृहाणि। तथ्यमिदमपि पूर्णांशेन स्वीकर्तुं न शक्यते। यतो हि भरतेन नाट्यगृहनिर्माणे भूमिचयनं स्तम्भानां स्थापनं भित्तिनिर्माणञ्च सविस्तरं वर्णितम्। तत्रापि भित्तिनिर्माणे आसनविधाने च श्लिष्टेष्टिकानामुपयोगः भरतेन वर्णितः। अनेन नाट्यगृहस्य स्थायिरूपमेव दृश्यते। भासेन प्रतिमा-नाटके राजप्रसादे सङ्गीतशालाया उल्लेखः कृतः काा-लिदासेनापि मालविकाग्निमित्रे शाकुन्तले च राजप्रसादस्य समीपे सङ्गीतशालायाः वर्णनं कृतम्। एतेन स्पष्टं ज्ञायते यन्नाट्यगृहस्य स्थायिरूपेण निर्माणमभवदिति। अनुपलब्धस्य नाट्यगृहस्य स्वरूपं ज्ञातव्यं चेत् संस्कृतनाटकानामेवाधारेण तत्शक्यमिति चिन्तनेन मया चितोऽयं शोधविषयः। विस्तार भयात् प्रतिनिधिकरूपेण कानिचन नाटकान्येवात्र स्वीकृतानि। भरतपूर्वकालस्य प्रतिनिधित्वं भासः करोति। भरतस्य नाट्य-परम्परायाः नौष्ठिक प्रयोक्तृरूपेण कालिदासः स्वीकृतः। भवभूतिना नाट्ये नूतनाः प्रयोगाः कृताः। अतः तस्य नाटकानां परामर्शोऽत्र कृतः। भरतोक्तनाट्यगृहस्य स्वरूपम् नाटकानां विश्लेषणात्पूर्वं भरतोक्तनाट्यगृहस्य स्वरूपं द्रष्टव्यम्। भरतेन वर्णितं नाट्यगृहं सुविदितमेव। अतः संक्षेपेणैवात्र निर्देशः कृतः। रङ्गपीठस्य पश्चिमभागे उन्नतं रङ्गशीर्षं कर्तव्यम्। रङ्गशीर्षामिदं षड्रारुकयुक्तं भवतीत्युक्तम्। रङ्गशीर्षः ‘विष्कृष्टे तून्नतं कार्यं चतुरस्त्र समं तथा’। षड्दारुकमिति काष्ठकर्मयुक्तयवनिका; इति वदन्ति केचन। अस्य पृष्ठतः गायकानां वादकानाञ्च उपवेशनं कर्तव्यम्।कार्यं द्वारद्वयं चात्र नेपथ्यगृहकस्य तु। षड्दारुकस्य उभयपार्श्वे द्वारद्वयं कर्तव्यम्। पटेनावृत्तमिदं द्वारद्वयम्। पटी अथवा अपटीति निर्देशः नाटकेषु दृश्यते। पात्राणां रङ्गमञ्चे चे प्रवेशार्थं द्वारद्वयं वर्तते। पात्रस्य मनःस्थितिमनुसृत्य अपटीक्षेपेण इति नाट्यसूचना नाटकेषु दृश्यते। नाट्यमण्डपस्यान्यदेकं वैशिष्ट्यमुक्तं भरतेन ‘कार्यः शैलगुहाकारो द्विभूमिर्नाटयमण्डपः।’शैलगुहाकारेण स्वरस्य गाम्भीर्यं यथावद्भवति। द्विभूमिर्नाट्यमण्डपः इत्यस्मिन्सन्दर्भेऽपि विद्वज्जनेषु मतान्तरं भवति। नाट्य गृहस्यौनत्यं द्विभूमिर्भवत्विति तस्य सर्वमान्यं स्वरूपम्। एतन्नाट्यगृहस्य स्वरूपम्। नाट्यगृहस्य भूमिचयनं, स्तम्भानां स्थापनं भित्तिनिर्माणं सुशोभीकरणं भरतेन सविस्तरं वर्णितम्। विस्तारभयादनुपादेयत्वाच्चात्र न वर्णितम्। नाट्यं नाट्यमण्डपश्च भिन्नत्वेन चिन्तयितुं न शक्यते कुत्रचित् नाट्यगृहाद्बहिरपि प्रयोगाः भवन्ति स्म। अत एव भरतेनोक्तम् -

अथ बाह्यप्रयोगेषु प्रेक्षागृहविवर्जिते।
विदिक्ष्वपि भवेदङ्गः कदाचिद्भर्तुराज्ञया।।17

राजाज्ञया बाह्यप्रयोगा अपि भवन्ति स्म इति ज्ञायते। परं ‘कदाचित्’ शब्देन नाट्यगृहनिर्माणमावश्यमित्यपि वक्तुं शक्यते। अतः संस्कृतनाटकानामाधारेण नाट्यगृहस्य स्वरूपमिदानीं पश्यामः।

भासस्य नाट्यप्रकाराः उपलब्धनाट्यप्रकारेषु प्राचीनतमा इति सर्वैरङ्गीकृतम्। भासस्य प्रयोगाधिष्ठितान्नाट्यप्रकारान् दृष्टवा नाट्यकला तदानीतनकाले प्रगतावस्थायामासीदिति स्पष्टं निरूप्यते। नाट्यगृहस्य स्थानम्- नाट्यगृहं राजप्रसादे वा प्रासादस्य समीपे वर्तते इति प्रतिमानाटकगतोल्लेखेन ज्ञायते। प्रतिमानाटकस्य प्रथमाङ्के रामस्य राज्याभिषेकस्य सिद्धता प्रचलत्यस्ति। उत्सवप्रसङ्गेऽस्मिन् नाट्यकलां प्रस्तौतुं प्रतिहारी नटान्प्रति सन्देशं प्रेषयति सागरिके सङ्गीतशालां गत्वा नाटकीयानां विज्ञापयं कालसंवादिना नाटकेन सज्जा भवतेति।18 उत्सवानुकूलं नाट्यप्रयोगस्य सिद्धतात्रापेक्षिता। अन्यच्चेयं सङ्गीतशाला राजगृहस्य समीपे एव वर्तते। तथा च नाट्यप्रयोगानां नैरन्तर्यमपि ज्ञायते। प्रतिमानाटकस्यैव प्रथमाङ्के यदा सीता स्वसख्याः हस्ते वल्कलं दृष्ट्वा तद्विषये पृच्छति। तदा सा वदति ‘श्रृणोतु भट्टिनी! नेपथ्यपालिन्यार्या रेवा निवृत्तरङ्गप्रयोजनमशोकवृक्षस्यैकं किसलयमस्माभिर्याचितमासीत्। न तया दत्तम्। ततो अर्हत्यपराध इतीदं गृहीतम्।’19 अनेनोल्लेखेन बहुनि तथ्यानि ज्ञायन्ते। प्रथमं त्वियं सङ्गीतशाला राजप्रासादस्य समीपे वा राजप्रासादे वर्तते। अन्यच्च प्रेक्षागृहस्य काचिन्नेपथ्यपालिनी नाम अधिकारिणी स्त्री वर्तते। नाटके तस्याः नाम रेवेति । अस्यां सङ्गीतशालायां वेषादिकानि नाटकीयाभरणानि सर्वदा सिद्धनि भवन्ति। सीतायाः भविष्यत्कालिकं वनगमनमत्र भासेन नाट्यपूर्णरीत्या सूचितम्।

# ऋषिणा कणादेन परमाणुस्वरूप विषये न साक्षादुक्तं वर्तते

आद्यस्य प्रश्नस्योत्तरप्राप्तयेऽनेन एपिक्युरसेन डेमोक्रिटसस्य मतमवलम्बितम्। अस्यानुसारेण जगत्तावदनन्त भौतिक परमाणूनां घात-प्रतिघातयोः परिणामत उत्पन्नम्। न तावत्किञ्चन प्रयोजनं वर्तते। मनुष्यश्च सदा गतिमतां परमाणूनां संघातरूपमेव। परमाणवश्च नित्याः, संघातश्चानित्यः, संघातस्यानित्यत्वाज्जगदपि अनित्यम्, मनुष्यस्य जीवनमपि अनित्यम्, अतो यावच्छक्ति मनुष्येण सुखमुपभोक्तव्यम्। पौरस्त्यदर्शनदिशा परमाणु (वाद) विचारः पौरस्त्यपाश्चात्यपरमाणुवादिदार्शनिकाः परमाणुतत्त्वं स्वीकुर्वन्ति। पौरस्त्यदार्शनिकेषु प्राधान्येन वैशेषिका नैयायिकाश्च परमाणुकारणतावादं विशदतया समर्थयन्ति। पौरस्त्यपाश्चात्यानामुभयेषां मते तत्त्वानां सर्वापेक्षया यो हि लघुतमो भागः, स एव परमाणुः। कणादमतानुसारेण परमाणुषु केचन नित्याः केचनागन्तुका गुणा भवन्ति। कणादस्तेषु स्वतो निष्क्रियत्वं मन्यमानः परतो गतिमत्त्वमाह। पृथिवी-जल-तेजो-वायवः परमाणुरूपेण नित्या इत्युक्त पूर्वमेव। तद्भिन्नं मनः परमाणुरूपं नित्यम्। परमाणवो भौतिकपदार्थानां परमसूक्ष्मा अभेद्या अन्तिमरूपाश्च। परिमाणञ्च तेषामणुरूपम्। ते च निर्भागास्सन्तो गोलाकारा वर्तन्ते। तेषां नान्तश्छिद्रं भवति। अतस्ते न परस्परमन्तः प्रवेशमर्हन्ति। ते च स्वयमगतिकाः सन्तो बाह्यसाधनेभ्यो गतिं लभन्ते। केचन वदन्ति यत् प्राचीनवैशेषिकाणां मते जीवानां स्वस्वादृष्टवशात्परमाणुषु गतिरुत्पद्यते। ततश्च परमाणवः कार्यभौतिकवस्तुरूपेण संयुक्ताः सन्तो जीवानां सुखदुःखकारका भवन्ति। केचन परवर्तिनो वैशेषिकास्तु ईश्वर एव परमाणुषु गतिमुत्पाद्य जीवानां धर्माधर्मरूपादृष्टसहाय्येन पृथक् पृथक् कार्यवस्तुरूपेण परमाणून् संयोजयति। एतावता कार्यरूपेण परमाणूनां संयोगः सहेतुको न तु निर्हेतुक आकस्मिको वा। जीवानां कर्मसिद्धान्तानुसारेणैव तथा परमाणूनां गतिः, संयोगश्च। ऋषिणा कणादेन परमाणुस्वरूपविषये न साक्षादुक्तं वर्तते। परन्तु परमाणुसद्भावे प्रमाणविषये ‘तस्य च कार्यं लिङ्गम् इत्युक्तम्। अर्थात्तस्य परमाणोः कार्यं घटादिकं लिङ्गं नाम हेतुः। तत्र प्रसङ्गे एतत्सूत्रपूर्वं सदकारणवन्नित्यमिति सूत्रं सूत्रितं वर्तते सूत्रकारेण। तत्र यद्यपि साक्षात्परमाणुपदं कणभुजा न प्रयुक्तमपि तु सदित्यनेन परमाणुज्ञेय इति व्याख्यातृणामाशयः। एतावता परमाणुस्वरूपविषये कणभुजा परमाणवः कारणाभाववन्तो नित्या भवन्तीत्युक्तं भवति। भाष्यकारेण प्रशस्तदेवाचार्येणापि यद्यपि परमाणुस्वरूपविषये न स्पष्टं किमप्युक्तं लभ्यते परन्तु पृथ्वीं विभजमानेन तेन सा च द्विविधा नित्या अनित्या च। परमाणुलक्षणा नित्या, कार्यलक्षणा त्वनित्या14 इत्युक्तं वर्तते। तेन च ज्ञायतेऽनेन परमाणूनां नित्यत्वं स्वीकृतमिति। कारणागुणाः कार्यगुणानारभन्त इति वैशेषिकाणां प्रसिद्धः सिद्धान्तः खलु। तेन च ज्ञायते कार्येषु ये गुणा भवन्ति ते च तेषां कार्याणां मूलभूतानां परमाणूनाञ्च भवन्तीति। परमाणुस्वरूपविषये कन्दलीकारोऽपि न किमपि वक्ति परन्तु परमाणुसत्त्वविषये तु तेन अनुमानमेवोररीक्रियते। तस्य परमाणोः कार्यं द्व्यणुक-त्र्यणुकादिकं च यदि निरवधि स्यात्तर्हि मेरुसर्षपयोः परिमाणभेदो न स्याद्, अनन्तावयवारब्धत्वाविशेषात्। तस्मान्निरवयवं द्रव्यमवधिः। तत्र न्यायकन्दलीकारस्यानु मानाकारश्च- ‘अणुपरिमाणतारतम्यं क्वचिद् विश्रान्तं परिमाणतारतम्यत्वात् महत्परिमाणतारतम्यवद्, यत्रेदं विश्रान्तं यतः परमणुर्नास्ति स परमाणुः स चाग्रे कथयति - (स च) नित्यः, द्रव्यत्वे सति अवयवाभावात्, यथाकाशम्। यद्ययं सावयवस्तर्हि न स परमाणुः (पूर्ववत्)।’ न्यायसूत्रकारो गौतमश्च ‘व्यक्तात् व्यक्तानाम् (उत्पत्तिः) प्रत्यक्षप्रामाण्यात्, अणुश्यामतानित्यत्ववद्वा, न प्रलयोऽणु सद्भावात्’ इत्यादिसूत्रैः परमाणुतत्त्वं विवृतम्। तत्र तावत् प्रथमसूत्रे अस्मादेव जगदेतज्जातमिति नोक्तं न्याय सूत्रकारेणापि तु व्यक्तादुत्पन्नमित्येवोक्तम्। तच्च व्यक्तं मूलत इन्द्रियग्राह्यं परन्तु तत्सामान्यात्परमाणुजातमपि ज्ञेयमिति ज्ञापयति भाष्यकारः- व्यक्तात् भूतसमाख्यातात् पृथिव्यादितः परमसूक्ष्मात् नित्यात् व्यक्तम् शरीरेन्द्रियविषयोपकरणाधारं प्रज्ञातं द्रव्यमुत्पद्यते, व्यक्तञ्च खल्विन्द्रियग्राह्यं तत्सामान्यात् कारणमपि (परमाणुरपि) व्यक्तम्। किं सामान्यम् रूपादिगुणयोगः रूपादिगुणयुक्तेभ्यः पुथिव्यादिभ्यो नित्येभ्यो रूपादिगुणयुक्तं शरीरादिकमुत्पद्यते।तथैवाग्रे परमाणुविषये सूत्रकारवचनं स्पष्टीकुर्वन् भाष्यकारः स्पर्शवाँश्चाणुर्नित्यः इत्यभिदधाति। स च यत्तावत् परमसूक्ष्मं यतो सूक्ष्म मन्यन्नास्ति, यच्च कार्याणां कारणं सत् स्वयमकारणं भवति तत् परमाणुरिति ज्ञापयति - ‘निरवयवत्वं खलु परमाणोर्वि भागैरल्पतरप्रसङ्गस्य (अभावात्) यतो नाल्पीयस्त त्रावस्थानात्। लोष्टस्य खलु प्रविभज्यमाना वयवयस्याऽल्पतर मल्पतममुत्तरमुत्तरं भवति स चायमल्पतरप्रसङ्गः यस्मान्नाल्पतरमस्ति, यः परमोऽल्पस्तत्र निवर्तते, यतश्च नाल्पीयोऽस्ति तं परमाणुं प्रचक्ष्महे इति।’ एतावता यच्च परमाल्पतरत्, निरवयवं, विभागरहितं तदेव परमाण तत्त्वमिति। सूत्रभाष्यकारयोरभिप्रायं स्पष्टीकुर्वन् वदति वार्तिककारः - यथा ह्यस्मार्भिदृश्यमानं पृथिव्यादिघटादिकस्य कारणं व्यक्तं दृश्यते, तत्कारणं यतो जायते तत्सामान्यात् तदपि व्यक्तमुच्यते। सामान्यञ्च रूपादियोगः। एतावता रूपवद्भिः परमाणुभिः कपालादिकं जायत इति स्पष्टम्। तच्च परमाणुजातं निरवयवम्, अकारणम्। सावयवत्वे सकारणत्वे च चानवस्थापत्तिः। तात्पर्यकारश्च पृथिव्याद्य वय विकार्यभूतानां मूलकारणत्वेन पार्थिवादिपरमाणून् स्वीचकार। स चाग्रे परमाणुश्च निरवयवः, परमत्वविशिष्ट इति वदति- ‘निरवयवत्वं तु परमाणोरिति। ..... परमत्व विशिष्टो ह्यणुः परमाणुर्यतः क्षोदीयो नापरमस्तीति यावत्। तस्मादपि चेत् क्षोदीयोऽन्यदस्ति नैष परमत्व विशिष्टोऽणुरित्यर्थः।’ पाश्चात्त्यदर्शनदिशा परमाणु (वाद) विचारः ल्युसिपस-डेमोक्रिटसयोः परमाणुवादिचिन्तनं पाश्चात्त्यदार्शनिकक्षेत्र अतीव महत्त्वपूर्णं मन्यते। अत्र चिन्तने यदि वयं किञ्चन निर्मितं वस्तु गृहीत्वा विभजनं कारं कारमग्रे गच्छामश्चेत्तादृशामवस्थां प्राप्नुमः, यस्यां तन्न विभजयितुं शक्यते।

# ‘तेन द्वावपि वर्गौ प्रेक्षागृहे सङ्गीत रचनां कृत्वा तत्र भवतो दूतं प्रेषयताम्’

स्त्रीबाहुल्यं दृश्यते। यतो हीयं रङ्गशाला अन्तःपुरे वर्तते। भरतेनाप्युक्तम् - मानकार्येषु नारीणां नियुञ्जीतानुचारिकाः। अन्तः पुराधिकारे हि राजचर्यानु वर्तिनाम्। सर्वनृत्ताङ्गयोगज्ञं नाट्यागारे निवेशयेत्। याः स्त्रियः अन्तःपुरे नियुक्ताः नृत्ये नाट्ये च निपुणाः भवन्ति ताः अन्तः पुरस्थित नाट्य शालायाम् अधिकारिणीरूपेण नियोक्तव्याः। तादृश्येव एषा रेवा नाम अधिकारिणी।प्रेक्षागृहस्य कृते सङ्गीतशालेति प्रयोगः दृश्यते। सङ्गीतं विना नाट्यं न भवत्येव। तेनैव सङ्गीतशाला इति प्रयोगः कृतः स्यात्। काा-लिदासस्य नाटकेष्वपि सङ्गीतशाला दृश्यते। अस्या उल्लेखः कुत्रचित् सङ्गीतशालारूपेण कुत्रचित् प्रेक्षागृहरूपेणापि दृश्यते। अभिज्ञानशाकुन्तले पञ्चमाङ्कस्य प्रारम्भे सङ्गीतशालातः हंसपदिकायाः स्वरसाधना राजप्रासादे सिंहासने उपविष्टेन राज्ञा श्रुतेति विदूषकः वदति। हंसपदिकाया उपालम्भस्योत्तरमपि राज्ञा विदूषकेन सह प्रेषितम्। ‘मालविकाऽग्निमित्रम्’ इति हरदत्तगणदासयोः नाट्याचार्ययोः संघर्षे शिष्यस्पर्धया निर्णयं भवत्विति निश्चयः जातः यतो हि प्रयोगप्रधानं हि नाट्यम्। तदा विदूषकः वदति ‘तेन द्वावपि वर्गौ प्रेक्षागृहे सङ्गीतरचनां कृत्वा तत्र भवतो दूतं प्रेषयताम्। अथवा मृदङ्गशब्द एव न उत्थापयिष्यति।’ एतेन ज्ञायते यत् सङ्गीतशाला, नृत्यशाला वा प्रेक्षागृहं एकस्यैव नाट्यगृहस्य भिन्नानि नामानि । अस्मिन् स्थायिप्रेक्षागृहे सङ्गीतं, नाट्यं नृत्य च निरन्तररूपेण प्रचलति स्म। अत्र राजपरिवारजनाः प्रशिक्ष्यन्ते यथा मालविका इरावती च। अत्रापि सङ्गीतशालायाः स्थानं राजप्रासादस्य समीपे एव वर्तते। यवनिका, पटी अथवा अपटी नाट्यगृहस्य अग्रभागे कुत्रापि यवनिकायाः पटस्य वा निर्देशः न दृश्यते। अत एव सर्वे निष्क्रान्ताः इति अङ्कसमाप्तिदर्शकसूचना सर्वेषु नाटकेषु दृश्यते। यवनिकाया उल्लेखः भासस्य नाटकेषु दृश्यते। यथा प्रतिमा- नाटके दशरथस्य मृत्योरनन्तरमेका नाट्यसूचना वर्तते कञ्चुकीयो यवनिकास्तरणं करोति। भरतेन रङ्गमञ्च केचन निषिद्धविषयाः प्रोक्ताः तेषु युद्धं नगरोपरोधः मृत्युरित्येते प्रमुखविषयाः। अत्र भासेन दशरथस्य मृत्युर्दर्शितः। कञ्चुकी तथा करोति इत्यनेन वाक्येन रङ्गमञ्चे कुत्रचित् यवनिकायाः स्थानमासीदिति ज्ञायते। तत्स्थानं कुत्र वर्तते? इत्यस्मिन् विषये सङ्गीता गुन्देचा लिखति -यवनिका वह परदा है, जो रङ्गमञ्च पर रङ्गशीर्ष और रङ्गपीठ के बीच होता है। गोवर्धन पाञ्चाल लिखति ‘दो तरह के परदों (यवनिका और अपटी) मे से यवनिका का प्रयोग रङ्गपीठ और रङ्गशीर्ष के मध्य केवल विकृष्ट मध्य नाट्यमण्डप में ही हो सकता है। अन्य दो प्रकार के (त्र्यस्र और चतुरस्र) नाटयमण्डप में नहीं। दशरथस्य मृत्युं गोपयितुमेव अस्याः यवनिकायाः प्रयोगः कृतः इति दृश्यते। उरुभङ्गेऽपि एतादृश्येव सूचना आगच्छति। तत्रापि मृत्युप्रसङ्ग एव दर्शितः। दुर्योधनस्य मृत्योरनन्तरं तस्य मृतदेहं रङ्गमण्डपादपसारयितुं यवनिकायाः प्रयोगः कृतः। तत्र नाट्यसूचना वर्तते- ‘यवनिकास्तरणं करोति।’ अनया सूचनया अस्य नाट्यप्रकारस्य समाप्तिर्भवति।भरतेन नेपथ्यगृहस्य द्वारद्वयमुक्तम्। द्वारद्वयमेतद् पटेनावृत्तं भवति। इत एव नटानां रङ्गमञ्चे प्रवेशः भवति। बहुषु नाटकेषु पटाक्षेप, अपटीक्षेपेण इत्येतादृशाः सूचनाः भवन्ति। अत्र पात्राणां केवलं गमनागमनं नापेक्षितम्। पात्राणां भावदर्शनामपि एतेन पटेन प्रदर्श्यते। अस्मिन्सन्दर्भे भरतः वदति - ‘अपटीक्षेपकृताश्चात्यधिकहर्षशोकरोषाद्याः’ अत्र नटानां हर्षशोकरोषान् दर्शयितुम् अपटीक्षेपो भवति। नाटयशास्त्रानुसारं प्रवेशसूचनां विना पात्रस्य प्रवेशः रङ्गमञ्चे न भवति। परं यत्र कुत्रापि भावनातिरेकेण सहसा पात्रप्रवेशः दर्शयितव्यः तत्र प्रवेशसूचनां विना नेपथ्यगृहस्य पटाक्षेपं कृत्वा नटः रङ्गमञ्चे प्रविशति यथा चारुदत्तनाटके भयाक्रान्तः संवाहकः अपटीक्षेपेण प्रविशति। अभिज्ञानशाकुन्तले षष्ठाङ्के नाट्यसूचना वर्तते ‘पुष्पावचयं कुर्वतीं चेटीं दृष्ट्वा’ प्रविश्यापटीक्षेपेण कुपितं कञ्चुकी प्रविशति।’ नेपथ्यगृहस्य द्वारद्वयं पटावृत्तं भवति इत्यस्य स्पष्टोल्लेखः मालविकाग्निमित्रेऽपि दृश्यते। द्वितीयेऽङ्के राजा सपरिवारं नृत्यस्पर्धां द्रष्टुं रङ्गपीठे उपविष्टः। यदा गणदासः मालविकायाः प्रवेशस्य सूचनां ददाति। तदा राजा नेपथ्यगृहं प्रति दृष्ट्वा वदति - ‘अधीरतया मालविकां द्रष्टुं जवनिकां संहर्तुमिच्छामि। नेपथ्यपरिगतायाश्चक्षुर्दर्शनमुत्सुकं तस्याः। संहर्तुमधिरतया व्यवसितमिव मे तिरस्करिणीम। अत्र जवनिकाया उल्लेखः महत्त्वपूर्णः। एतेन नेपथ्यगृहं पश्चिमे दिग्विभागे भवतीति ज्ञाय-ते। अग्निमित्रः पुनः वदति- ‘द्वारपिधानमिव धृतेर्मन्ये तस्यास्तिरकरिणीम्। अत्र तिरस्करिणी शब्दः जवनिकायाः कृते प्रयुक्तः। जवनिका शब्दः ‘यवनशब्दादागत इति वदन्ति’ केचन विद्वांसः। अनेन ग्रीकनाट्यपरम्परा लक्ष्यते इत्यपि ते वदन्ति। परं ग्रीकनाट्यगृहेषु यवनिका न प्रयुज्यते। संस्कृतनाट्यप्रकारेषु पात्राणां प्रवेशः सूचनां विना न भवतिति दृष्टमस्माभिः। कुत्रचित् प्रवेशिकी ध्रुवागानं भवती। तदनन्तरं पटाकर्षणं कृत्वा पात्रप्रवेशो भवति। यथा ‘विक्रमोर्वशीयम्’ नाटके चतुर्थाङ्के पुरूरवसः प्रवेशार्थं प्रावेशिकी ध्रुवा भवति। तत्र नाट्यसूचना वर्तते - ‘नेपथ्ये पुरूरवसः प्रावेशिक्याक्षिप्तिका। ध्रुवागानादनन्तरं पुनः नाट्यसूचना वर्तते। ‘ततः प्रविशति उन्मतवेषी राजा।’ संस्कृतटीकायां तस्य स्पष्टीकरणं दत्तमस्ति - नेपथ्ये- जवनिकायाः पृष्ठभागे। प्रावेशिक्या प्रवेशसूचनिकया आक्षिप्तिका नाम्नी गीतिका गीयते। भरतः तत्र वदति - ध्रुवायां संप्रयुक्तायां पटे चैवापकर्षिते। कार्यः प्रवेशः पात्राणां नानार्थरससम्भवः। तिरस्करिणी शब्दस्य प्रयोगः कालिदासेनान्यत्रापि कृतः। यथा शाकुन्तलस्य षष्ठाङ्के सानुमती मेनकायाः आदेशानुसारं ‘राजर्षेरुदन्त प्रत्यक्षीकरोमीत्युक्त्वा तिरस्करिणीप्रतिच्छन्ना पार्श्ववर्तिनी भूत्वोपलप्स्ये’ इति वदति। अत्र तिरस्करिणी विद्येदित्यर्थः। परं रङ्गमञ्चे स्वरूपाच्छादनार्थं वस्त्रेणावृत्तेति दृश्यते। विक्रमोर्वशीयमित्यस्मिन्नाटकस्य तृतीयाङ्के चित्रलेखा उर्वशी च राजानं द्रष्टुमागच्छतः। तदा उर्वशी ‘अनुक्षिप्ततिरस्करिणीका’ प्रविशति। अत्राप्याच्छादकं वस्त्रामित्येवार्थः। दिव्यपात्राणां छन्नवेषः भरतेनोक्तः नाटके छन्नवेषाणां दिव्यानां भूमिसञ्चारः। मानुषैः कारणादेषां यथा भवति अभिदर्शनम्। अभिज्ञानशाकुन्तलस्य पञ्चमाङ्के नाट्यसूचना वर्तते ‘ततः प्रविशत्यासनस्थो राजा विदूषकश्च।’ स्वप्नवासवदत्ते ‘ततः प्रविशत्युपविष्टा तापसी।’ उरुभङ्गे ‘ततः प्रविशति भग्नोरुयुगलो दुर्योधनः।’ एताः नाट्यसूचनाः दृष्ट्वा कथं भवति एतादृशप्रवेशा इति मनसि शङ्का जायते। अत्रापि यवनिकायाः प्रयोग आवश्यक एव। अत्र पुरुषद्वयधृतपटेनावृत्तप्रवेशः शक्यः। प्रवेशानन्तरं पटापसरणं भवति। अन्यथा एतादृशप्रवेशा रङ्गशीर्षे यवनिकायाः पार्श्वे भवितुमर्हन्ति। एतादृशाः प्रवेशसूचनाः सर्वेषु नाटकेषु दृश्यन्ते। परं पटान्तर्गतप्रवेशः यवनिकायाः पार्श्वे उपविष्टा वेति नाट्यसूचना न दृश्यते कुत्रापि। अतः स्पष्टं न ज्ञायते यद् प्रवेशार्थं यवनिकायाः प्रयोगः क्रियते वा न वेति। भवभूतिना मालतीमाधवे चित्रयवनिकायाः उल्लेख कृतः। एतेन ज्ञायते यत् चित्राङ्कितचलत्पटयुक्तेयं यवनिका। अस्याः पार्श्वे वेषपरिवर्तन मुपविष्टनटानां वा आसनस्थनटानां प्रवेशो भवतीति। अस्याः चित्राङ्कित यवनिकायाः वर्णनं न भरतमुनिना कृतं नापि च पूर्वतनभासादिभिः नाटककारैः कृतम्। भासस्तु यवनिकायाः उल्लेखं करोति। सैव चित्र यवनिका स्यात्। भवभूतिना प्रथममेव यवनिकायाः चित्रयवनिकेति नामनिर्देशः कृतः। आधुनिककाले केरलप्रदेशे कृष्णाट्टम कुडियाट्टं शैल्यां नाटकानां प्रयोगो भवति तत्र एतादृश चित्रयवनिकायाः उपयोगो भवति। मालतीमाधवस्य षष्ठाङ्के कामन्दकीवचनानुसारं मालत्याः वैवाहिकवेषधारणार्थं मकरन्दः वदति - ‘यदाज्ञापयासि यावदितश्चित्रयवानिकामन्तर्धाय नेपथ्यं धारयामि।

### ‘अये दक्षिणेन वृक्ष वाटिका यामालाप इव श्रूयते’

मत्तवारणी - रङ्गपीठस्य उभयपार्श्वे चतुःस्तम्भसमायुक्ता मत्तवारणी कर्तव्येति भरतस्य निर्देशः। अभिनयार्थं विशेषस्थानमिदम्। यदा रङ्गमञ्चे विभाजनं दर्शयितव्यं तदा मत्तवारण्या उपयोगः क्रियते। यथा स्वप्नवासवदत्तस्य चतुर्थाङ्के उदयनविदूषकयोः वार्तालापं माधवीलतामण्डपे उपविष्टे पद्मावतीवासवदत्ते श्रृणुतः। अस्य माधवीलतामण्डपस्य स्थानं मत्तवारण्यां भवितुमर्हति। भासेन तादृशः निर्देशः अत्र न दत्तः। परमेतेन रङ्गमञ्चविभाजनेन एकस्येव रङ्गमञ्चस्य अभिनयक्षेत्रं भिन्नमिति भाति। रङ्गमञ्चेऽभिनयस्य कृते विभिन्नानि स्थानानि सन्ति यथा रङ्गपीठं रङ्गशीर्षं मत्तवारणी द्वयञ्च। एतानि सर्वाणि स्थानानि दर्शकाणां कृते प्रत्यक्षदर्शनयोग्यानि। अत एव अभिनयस्य कृते योग्यानि। अभिज्ञानशाकुन्तस्य प्रथमाङ्के मृगानुसारी दुष्यन्तस्य प्रवेशः नेपथ्यगृहस्योत्तरद्वारेण रङ्गशीर्षे भवति। दुष्यन्तः चन्द्रवंशी राजा। नाट्यशास्त्रानुसारं गङ्गाया उत्तरभागे निवसन्तः मध्यमाप्रवृत्तिमनुसरन्त उत्तरद्वारेण प्रविशन्ति। अत्र नाट्यसूचना वर्तते - ततः प्रविशति मृगानुसारी सशरचापहस्तो राजा रथेन सूतश्च। अत्र ‘रथवेगं निरूप्य’ इत्यनया नाट्य सूचनया ज्ञायते यद् दुष्यन्तः रथवेगमभिनयेन दर्शयति। हरिणस्य वेगं दर्शयितुं कालिदासेन तस्य स्वभावोक्तिपूर्णं वर्णनमपि कृतम्। शकुन्तलायाः प्रवेशः दक्षिणद्वारेण भवति। ‘अये दक्षिणेन वृक्षवाटिकायामालाप इव श्रूयते’ इति दुष्यन्तस्य वाक्येनानेन सखिभिः सह शकुन्तलायाः प्रवेशस्य स्थानं सूचितम्। शकुन्तला वृक्षसेचनं रूपयित्वा रङ्गशीर्षात् रङ्गपीठेऽवतरति। दुष्यन्तः पादपान्तर्हितो भूत्वा तासां वार्तालापं श्रृणोति। शकुन्तलायाः भ्रमरबाधाप्रसङ्गादनन्तरं यदा राजा ताभिः सह वेदिकायामुपविशति सा वेदिका मत्तवारण्यां भवितुमर्हति। प्रसङ्गेनानेन रङ्गमञ्चस्य प्रायः सर्वाणि स्थानानि दर्शितानि। रङ्गमञ्चस्य विभाजनमपि शक्यते। विषयवस्त्वनुसारं कक्षाविभाजनं भरतेनोक्तम् -नगरे वा वने वापि वर्षे वा पर्वतेऽपि वा। यत्र वार्ता प्रवर्तते तत्र कक्ष्यां प्रयोजयेत्। कक्षा विभाजनं बहुषु नाटकेषु दृश्यते परं मत्तवारण्याः नामनिर्देशः न दृश्यते। राजशेखरस्य विद्धशाल भञ्जिकायां द्वितीयाङ्के प्राप्यते ईदृशः निर्देशः। अत्र विदूषकः राजानं वदति - भोः पोगण्डा इव उर्ध्वजानुकौ कियच्चिरं स्थास्यावः। तस्मादेही मत्तवारणोपरि उपविशावः। अत्रैव पुनः विदूषकः वदति, ‘तदेहि अवतरावः। मत्तवारणीविषये नारायणदीक्षितेन स्पष्टीकृतम्’ वालापं मत्तवारणम्। सैव मत्तवारणी कपोतपालिकेति केचित्। गजदन्तैः कृता शाला विज्ञेया मत्तवारणीत्यन्ये वातायनानामग्रे उपवेशार्थं दारुभिः पाषाणैर्वा निर्मितं स्थलमित्यपरे। विदूषकस्य मत्तवारणोपरि अधिरोहणमवतरणश्च तस्मात् स्पष्टं भवति। उत्तररामचरितस्य सप्तमाङ्के गर्भाङ्कस्य प्रयोगः भवभूतिना कृतः। गर्भाङ्कस्य लक्षणं विश्वनाथेनोक्तम्- अङ्कोदरप्रविष्टो यो रङ्गद्वारा मुखादिमान्। अङ्कोपरः स गर्भाङ्कः सबीजः फलवानपि। अङ्कस्य प्रारम्भे लक्ष्मणः वदति - ‘भगवता वाल्मीकिना स्वकृतिमप्सरोभिः प्रयुज्यमानां द्रष्टुमुपनिमान्त्रिताः स्म।’ गङ्गातीरमातोद्यस्थानमुपगम्य क्रियतां समाजसंनिवेशः। प्रयोगस्यास्य कृते अस्थाया ^रुपेण प्रेक्षागृहस्य व्यवस्था कारिता स्यात्।

# अमृतवाणी गीतातत्वार्थ बोधः

**गीता ज्ञानप्रियः सदा सुखी भवति।**

शत्रुघ्नश्रीनिवासाचार्यः ( पंडित शंम्भुनाथ शास्त्री वेदान्ती ) भागलपुर ( बिहार )

**बलवानिन्द्रयग्रामो**
**विद्वासमपि कर्षति।**
**यततो ह्यपि कौन्तेय**
**पुरुषस्य विपश्चितः।**
**इन्द्रियाणि प्रमाथीनि**
**हरन्ति प्रसभं मनः॥**
**भगवद्गीता ॥ 2-61॥**

**संस्कृतभाष्यम्-**

**इन्द्रियनिग्रहार्थं हि**
**विद्वान् यत्नं करोति यः।**
**बलवानिन्द्रयग्रामः**
**हरति तस्य वै मनः॥**

भगवान् श्रीकृष्णःगीतायाः द्वितीयेऽध्याये 60 तमे श्लोके अर्जुनं सम्बोधयति यत-हे कौन्तेय! हे अर्जुन! पुरूषाणां विषयेषु आसक्तिकारणात् प्रमथन्स्वभावयुक्तानीन्दर्याणि इन्द्रियनिग्रहार्थं यत्नकर्तॄणां विदुषांयोगविद्यापारङ्गतानां

**मनः बलात् हरन्ति ।**

**मनुस्मृतावपि मनुनोक्तञ्च-**
**मात्रा स्वस्त्रा दुहित्रा वा**
**न विविक्तासनो भवेत्।**
**बलवानिन्द्रयग्रामो**
**विद्वांसमपि कर्षति**
**( मनुसमृतौ /2/215 )**

अत्र विशेषतःइन्द्रियाणि विचारणीयानि सन्ति। आत्मदर्शनं विना इन्द्रियाणामासक्तेर्नाशः न सम्भवति तथा विषयासक्तौ स्थिते सत्यपि स्थितप्रज्ञता न आयाति,पुनश्चः स्थितप्रज्ञतां विना आत्मदर्शनं नैव भवितुर्हति। एवमत्रान्योन्याश्रयदोषः संजायते तर्हि भगवता श्रीकृष्णेन आत्मसाक्षात्काराय यः उपायः निर्दिष्टः सः निष्फलःएव दृश्यते। परञ्चात्र अग्रिमे 61 तमे श्लोकेऽस्य उपायः भगवता श्रीकृष्णेनैव

**निर्दिष्टः--**

**तानि सर्वाणि संयम्य**
**युक्त आसीत् मत्परः।**
**वशे हि यस्येन्द्रियाणि**
**तस्य प्रज्ञा प्रतिष्ठिता॥**
**भगवद्गीता ॥2-61॥**

**अर्थात्-** यः जितेन्द्रियः कर्मयोगी पुरुषः अनासक्तो भूत्वा मयि परमेश्वरे एव मनः स्थापयति सः विद्वान् पुरुषः स्थितप्रज्ञः कथ्यते। अन्वयशब्दार्थः-

**श्लोक संकेतः-**
**यततो ह्यपि कौन्तेयः-**
**हरन्ति प्रसभं मनः॥**
**गीता/2/60**

कौन्तेय- हे अर्जुन!, यततःमन के निग्रह के लिए बहत सा यत्न करते हुए आत्मदर्शन के लिए प्रयत्नशील, हृभी, विपश्चितः शास्त्रवेत्ता विवेकी, पुरुषस्य पुरुष के,अपृभी, प्रमाथीनि प्रबल, इन्द्रायाणिचक्षु आदि इन्द्रियाँ, मन विषया सक्त मन को, प्रसभं बलपूर्वक खीचकर, हरन्ति विषय भोग में लगा देती हैं।

**तत्वार्थः-** हे कुन्तीपुत्र अर्जुन!मन का निग्रह करने के लिए बहुत सा यत्न करते हुए आत्मदर्शन के लिए प्रयत्नशील विद्वान् शास्त्रवेत्ता योगी पुरुष के मन को भी बलबान् इन्द्रियाँ बल पूर्वक हर लेती हैं। तात्पर्य यह है कि ये इन्द्रियाँ मन को विषय की ओर लगाकर आत्मदर्शन से वञ्चित कर देती हैं।

**रहस्यात्मक- तथ्य -**मनुष्य अपने जन्म-जन्मान्तर के विषय गत संस्कार वश इन्द्रियों के वशीभूत होकर आत्मदर्शन से वञ्चित होते रहते हैं। इन्द्रियाँ इतनी बलवती होती हैं कि इन्द्रियों को संयमित करने हेतु कठिन यत्न करने वाले बड़े -बड़े योगी यतियों के मन को भी ये इन्द्रियाँ अपने विषयों में लगाकर भटकाती रहती हैं। यहाँ एक कठिन समस्या सामने खड़ी दिखाई दे रही है कि -- आत्मदर्शन के विना इन्द्रियों की विषयासत्तिकदापि नहीं हट सकती तथा विषयासक्ति हटे विना स्थितप्रज्ञता नहीं आ सकती तथा स्थितप्रज्ञता प्राप्तकिये विना स्वस्वरुप का बोध नहीं हो सकता है अर्थात् आत्मदर्शन सम्भव नहीं है, जो अन्योन्याश्रय दोष को उपस्थापित करता है। इस प्रकार भगवान् ने जो आत्मसाक्षात्कार के उपाय सुझाये हैं वे निष्फल सिद्ध हो जायेंगे। लेकिन इसके लिये भगवान् ने आगे के श्लोक संख्या 2/61में इस समस्या का निदान कर दिया है--

**तानि सर्वाणि संयम्य**
**युक्त आसीत मत्परः।**
**वशे हि यस्येन्द्रियाणि**
**तस्य प्रज्ञा प्रतिष्ठिता॥**
**भगवद्गीता / 2/61**

अर्थात् कर्मयोगी साधक उन सम्पूर्ण इन्द्रियों को वश में करके मेरे परायण होकर बैठे,क्योंकि जिसकी इन्द्रियाँ वश में हैं उसकी बुद्धि प्रतिष्ठित है।

# ॥ गीताज्ञानामृतविन्दवः॥

गीताज्ञान संचरण समितिः, पटना, विहार, अध्यक्षः
डॉक्टर सुदर्शन श्रीनिवास शाण्डिल्यः

*॥ हे कृष्ण हेकृष्ण हे कृष्ण। ।*
*॥ रक्ष रक्ष रक्ष रक्ष रक्ष रक्ष रक्ष सततं मां॥*
*नहि त्वां विना मम कश्चिद्। ।*
*॥ मा जीहपः मा जीहपः मा जीहपः॥*
*॥ त्वमेव नाथः त्वमेव नाथः त्वमेव नाथः॥*
*पाहि मां पाहि मां पाहि मां॥*
*॥ कृष्ण कृपा कृष्ण कृपा कृष्ण कृपा*
*॥ मोघं पार्थ स जीवति॥ गीतामृतः॥*

अनन्त करूणावरूणास्य अनन्त कल्याण गणनिलय नारायणस्य महत्यनुकम्पया मानवजीवनं प्राप्यते। जीवनस्य सार्थक्यं प्रभुप्राप्तिरेव। येन पुनर्जन्म न भवति। पुनर्जन्म एव दुःखालयं। भगवता कृष्णेन सुस्पष्टमेवोक्तं 'मामुपेत्य' पुनर्जन्म न भवति। तेन स्वात्म स्वातन्त्र्यं जन्मकर्मबन्धनरहितं प्रवर्तते। सृष्टेर्मूलं यज्ञः। यज्ञे सर्वव्यापी परमोऽक्षरः परमात्मा प्रातिष्ठितः। अतः परमात्मनः सम्बन्धः एव नित्यः शाश्वतं हितकरः। एवं सृष्टिचक्रानुसारेण तस्य परमात्मनः प्राप्तिरेव मानवजीवनस्य महत्वपूर्णं कर्तव्यं। यदि मानव जीवनं प्राप्यापि केवलमिन्द्रियरमणमेव भवेत्, तर्हि स पुरुषः पापायुः व्यर्थमेव जीवति। यथा गीतायां एवं

प्रवर्तितं चक्रं नानुवर्तयतीह यः।
अघायुरिन्द्रियारामो मोघं पार्थ स जीवति।

**विमलः हिन्दी भावानुवादः।** वास्तविक शाश्वत अक्षुण्ण आत्मकल्याण परमात्मा के साथ सम्बन्ध संचार में ही है। यही अर्जुन कृष्ण संवाद तथा दोनों के पारस्परिक व्यवहार से सुबोध होता है। परमात्मा जीवात्मा को स्वात्मस्वातन्त्र्य में अधिष्ठित बोध कराना चाहते हैं। युग-युगान्तर कल्प कल्पान्तर जन्म जन्मान्तर से जीव इन्द्रियाधीन होकर परतन्त्रता के महाबन्धन से पीडति व्यथित तथा दारूण दुःख बिद्ध है। जीव इस परतन्त्रता से मुक्त होने केलिए व्यग्रता है।पर वह महाबन्धन से मुक्ति के लिए संसार को ही उपाय मानता है। यही उसका महाभ्रम है। संसार तो सदैव बन्धन परतन्त्रता ही देता है।संसार का कोई भी सम्बन्ध यदि बन्धन कारक, स्वतन्त्रता का बाधक है तो शीघ्र उसे छोड़ देना चाहिए। संसार सदैव अनुकूल करना चाहता है, संसार सदैव उच्च नीच भेद जनक व्यवहार करता है। संसार सदैव दोष देखता है। पर परमात्मा इससे सर्वथा पृथक् हैं। वे सदैव जीव कल्याण केलिए तत्पर होते हैं। जीव कल्याण केलिए वे अपने अस्तित्व का ध्यान कभी नहीं देते हैं। वस केवल केवल केवल जीव का कल्याण। ऐसा निर्मल पवित्र हितकर सुन्दर भाव परमात्मा के अतिरिक्त कहीं संभव नहीं। है।

अतः सुनिश्चित रूप से परमात्मसम्बन्ध में ही जीवात्मा का कल्याण है।

# अनयैव रीत्या पाश्चात्त्य परमाणुवादि दर्शनदिशा जगत्सृष्टिविषयकाणि चिन्तनानि

अनयैव रीत्या पाश्चात्यपरमाणुवादिदर्शनदिशा जगत्सृष्टिविषयकाणि चिन्तनानि लभ्यन्ते। एतदेव न्यायवैशेषिकपाश्चात्त्यपरमाणुवादिदर्शनसम्मतसृष्टिविषयकस्य विवृतस्य चिन्तनस्य गाढन्तत्त्वङ्किम् कथञ्च वस्तुतो न्यायवैशेषिकपाश्चात्यपरमाणुवादिदर्शनदिशा जगदुत्पत्तिविचारः प्रवर्तते । तद्द्वयोर्दर्शनयोः के च तद्विषयके साम्यवैषम्य इत्यादीनां विषयाणां यथार्थं गाढञ्च चिन्तनं विश्लेषणञ्च निर्मितस्यास्य शोधपत्रस्य मुख्यं ध्येयं वर्तते। न्यायवैशिषिकदर्शनद्वयं पौरस्त्यपरमाणुवादिदर्शनत्वेन प्रसिद्धम्। पौरस्त्यचिन्तने यद्यपि शास्त्राणामनादित्वमपि त्वद्यास्माभिर्न्यायदर्शनत्वेनाधीयमानसूत्रस्य प्रणेता गौतमः। तत एव न्यायदर्शनस्य इतिहासश्चिन्त्यते। न्यायदर्शनञ्च प्राचीननव्यभेदाद् द्विधा विभज्यते। तत्र गौतमादारभ्य वात्स्यायनादयः प्राचीनाः। नव्यन्यायश्च गङ्गेशत आरभ्यते। तदनन्तरं वर्धमानोपाध्याय-पक्षधरमिश्रादयः प्रसिद्धाः। वैशेषिकदर्शनस्य प्रणेता कणादमुनिः। तदनन्तरं प्रशस्तपाद-श्रीधराचार्यादयो वैशेषिकदर्शने प्रसिद्धाः।

थेलिसादीनां दार्शनिकानां परमाणुवादेन सह न साक्षात् सम्बन्धोऽपि पूर्वापरिभावज्ञापनार्थमेव तेषां सामान्यवर्णनं कृतम्। मूलत एम्पेडोक्लीजतः परमाणुवादस्य बीजं लभ्यते। अनेन च चतुर्विधाः पार्थिवादयोऽणवः स्वीकृताः। ततश्च परमाणुवादिषु एनेक्सागोरस आगच्छति, तेन न केवलं चतुर्विधाः पार्थिवादयः परमाणवः स्वीकृताः, अपि तु नैकेऽणवः स्वीकृताः। ततो ल्युसिपसः प्रसिद्धः। तस्य

**परमाणुवादिदर्शने गुरोर्ल्यसिपसस्य डेमोक्रिटसस्य शिष्यस्य च पृथक्त्वेन कियत् कियदवदानं वर्तते इत्यत्र न विस्पष्टं वक्तुं शक्यते**

शिष्यतो डेमोक्रिटसतः परमाणुवादः प्रसिद्धः। परमाणुवादिदर्शने गुरोर्ल्यसिपसस्य डेमोक्रिटसस्य शिष्यस्य च पृथक्त्वेन कियत् कियदवदानं वर्तत इत्यत्र न विस्पष्टं वक्तुं शक्यते। अनयोश्चिन्तनपथेन शैल्या च तत्पूर्ववर्तिनां चिन्तनपथात् शैल्याश्च न केवलं स्पष्टीकरणं विशदीकरणमेवापि तु परमाणुवादचिन्तने तथा यान्त्रिकप्राक्कल्पनानां तन्मूलभूतनियमानां संस्थापनं विहितम्, यच्च संस्थापनमद्यतनविज्ञानस्य विकासस्यापि आधारभूतं जातम्। अतो वक्तुं शक्यते यद् एम्पेडोक्लीज-एनेक्जागोरसाभ्यां जगत्युत्पन्नानां वस्तूनां मूलकारणत्वेन परमाणुषु स्वीकृतेष्वपि तेषां स्वरूपविषये तेभ्य उत्पन्नेषु वस्तुषु व्याप्तस्य गुणस्य उत्पत्तिविषये, तेषां गतिकारणविषये वैज्ञानिकोत्तरदाने महत्कार्य मनेन कृतम्। ल्युसिपस डेमोक्रिटसाभ्यां पूर्ववर्तिनोरेम्पेडोक्लीज- एनेक्जागोरस दार्शनिकयोश्चिन्तने बीजत्वेन स्थितं परमाणुवादं पूर्णतया तार्किकरीत्या वैज्ञानिकरीत्या च विविच्य पूर्णपरमाणुवादः संस्थापितः। फलतः पूर्ववर्तिनोश्चिन्तने आपतिताः समस्याश्च समाहिताः। एतावता डेमोक्रिटसेन एम्पेडोक्लीज-एनेक्जागोरसयोश्चिन्तनं सिद्धान्तञ्चोररीकृत्य तयोश्चिन्तने स्थितानस्वरसाँश्च दूरीकृत्य वैज्ञानिकः परमाणुवादः दृढीकृतः।

**वर्षाभिः भौमवासरे नगरस्य दृश्यम् उपस्थितम्**

छायाकारः सौरभ कुमार

# पौरस्त्य-पाश्चात्त्यपरमाणुवादिदर्शनानां संक्षिप्तेतिहासपरिशीलनम्

*सन्ति पौरस्त्यपाश्चात्त्यदर्शनगतेषु विविध विषयेषु नैकविध विद्वद्भिर्विहितानि परिशीलनानि चिन्तनानि च। तेषु च नैकान् विषयानवलम्ब्य शक्यते कर्तुं परिशीलनं समीक्षणात्मक मध्ययनञ्च। अपि त्वत्र उक्तदर्शनसम्मताया जगदुत्पत्ति प्रक्रियायाः समीक्षणात्मकं परिशीलनमेव निर्मितस्यास्य शोधपत्रस्य क्षेत्रं सीमा च वर्तते। तत्र भवद्भिरनेकैर्विद्वद्भिर्जगदुत्पत्ति विषयकाणि न्यायवैशेषिकदर्शनसम्मतानि पाश्चात्त्य परमाणुवादि दर्शनसम्मतानि च कानिचन चिन्तनानि विहितानि वर्तन्त इति विस्पष्टं ज्ञायते अथापि प्रथमन्तावत्तानि च चिन्तनानि विकीर्णरूपेण कृतानि दृश्यन्ते। द्वितीयन्तु पृथक्त्वेनापि कृतानि तानि चिन्तनानि अपर्याप्तानि वर्तन्ते, तत्र साम्यवैषम्यविचारश्च न प्रस्तुतो वर्तते। येन न्यायवैशेषिक पाश्चात्त्य–परमाणुवादिदर्शनसम्मतजगदुत्पत्तिप्रक्रियायाः समीक्षणात्मकं परिशीलनं न जातं वर्तत इत्यनुभूयते। प्रस्तुत स्यास्य शोधपत्रस्य मुख्यमुद्देश्यं पौरस्त्य-पाश्चात्त्य परमाणुवादिदर्शनाभिमतसृष्टिविषयकं समीक्षणम् इत्याख्ये शोधशीर्षके केन्द्रीभूय समस्याकथन उपस्थापितानां समस्यानां समाधानमेव वर्तते। फलतो निर्मितस्यास्य शोधपत्रस्योद्देश्यमधोनिर्दिष्टानुसारं वर्तते-*

*(क) पौरस्त्य-पाश्चात्यपरमाणुवादिदर्शनानां संक्षिप्तेतिहासपरिशीलनम्।*

*(ख) उक्तदर्शनद्वयाभिमतसृष्टिप्रक्रियाविश्लेषणम्।*

*(ग) उक्तदर्शनद्वयाभिमतसृष्टिप्रक्रियायाः साम्यवैषम्ये परिशील्य, तन्निष्कर्षणम्। अतो निर्मितेऽस्मिन् शोधपत्रे नैकेषां प्राच्यप्रतीच्यो भयविधानां प्राचीनानाम् ऋषीणाम् ऋषि कल्पानाञ्च विपश्चितां जगदुत्पत्तिविषयकाणामनेकविधानां सिद्धान्तानामाधारेण न्यायवैशेषिक -पाश्चात्त्य परमाणुवादि दर्शनसम्मतजगदुत्पत्तिविषयकचिन्तनगतां प्रक्रियां सप्राणं ससत्तर्कं च विश्लिष्य, तद्गतसाम्यवैषम्ये परिशील्य सविस्तरमेकीकृत्य समीक्षणात्मकं विवेचनं विहितं वर्तते। शोधपत्रञ्चैतज्जगदुत्पत्तिविषय उक्तदर्शनगतसिद्धान्तानवलम्ब्य निर्मितमत एतत्साहाय्येनाग्रेऽनुसन्धानमध्ययनमध्यापनञ्च च महत्सौकर्यं भजन्ते, फलतो निर्मितं शोधपत्रमौचित्यपूर्णं वर्तते।*

अधुनातनेऽतिनूतने विज्ञानक्षेत्रे प्राक्तननूतन पौरस्त्यपाश्चात्त्योभयविधदर्शन क्षेत्रे च जगतः सृष्टिप्रक्रियाविषयको विचारो महद्वैशिष्ट्यमावहति। कथं भोः! जगतः सृष्टिः किमर्थञ्चेयमित्यतिगहनेऽस्मिन् विषये वर्षाणां सहस्त्रैः प्राच्य प्रतीच्योभयविध दार्शनिकै र्विपश्चिद्भिरन्विष्यमाणं वर्ततेऽपि तु सन्ति बहवः क्लेशास्तत्र विषये। परं चिन्तननिदिध्यासनरतैः पौरस्त्यपाश्चात्यदार्शनिकर्षिभिर्बहु अन्विष्टम्। इत्थञ्च तावत्कतिपयपौरस्त्यदर्शनेषु कतिपयानि नित्यानि वस्तूनि स्वीक्रियन्ते। तेषामुत्पत्तेर्न कथा, कार्याणां वस्तूनामेवोत्पत्तेः कथा। तत्रैव वर्तन्ते विविधा विचाराः। सोऽयं विश्वोत्पत्तिप्रकारः पौरस्त्यचिन्तनधारायाम् ऋग्वेदकालादारभ्याद्यापि प्रक्रान्तो वर्तते। ऋग्वेदस्य दशममण्डले नासदीयसूक्ते जगदुत्पत्तिविषयकाणां दशवादानां विचारः प्रदर्शितः। जगन्मूलकारणविषये तत्प्रकारविषये च श्रुतिष्वपि मतभेदाः प्रथिताः। ते च दशधेति श्रुतिषु व्याख्याताः।1 तत्तावद् दशविधविचाराणां मूलं मते च पौरुषेयत्वेऽपि विश्वस्य साहित्यस्य प्रथमभूतस्य ऋग्वेदस्य दशममण्डलस्य नासदीयसूक्ते2 विवृतं वर्तत इति वेदविज्ञानचणाः। तत्र सृष्टिपूर्वं तावन्न सदासीन्न वासदासीत्, न हि आकाशमासीद् इत्यादिकं विवृत्य जगत्सृष्टिविषये दशवादाश्चोक्ता वर्तन्ते। ब्राह्मणे चेयं विश्वोत्पत्तिप्रक्रिया आम्नाता। तत्र किं स्यात् तन्मूलं वृक्षो वा यतः खगोलं, भूगोलञ्च (आकाशं पृथिवी) जाते इति विचिकित्सा प्रदर्शिता वर्तते। तत्रैव उत्तरे चैतज्जगतो मूलभूतं बीजं वृक्षो वा ब्रह्म एवेति प्रत्युक्तं वर्तते। उपनिषत्सु ऋषिभिर्जगन्मूलकारणविषयका नैके विचाराः सिद्धान्ताश्च प्रतिपादिता वर्तन्ते। उपनिषदि जगन्मूलकारणकं चिन्तनं स्थूलतः सूक्ष्मं जातं दृश्यते। प्रथमन्तावत् सामान्यतः सर्वस्य जगतो भौतिकत्वेन दृश्यमानत्वादनुभूयमानत्वाच्च पञ्चसु भूतेष्वन्यतमस्य कस्यचनैकस्य जगन्मूलकारणत्वमुररीकर्तुमृषीणां दृष्टिर्गता। ततश्च भौतिकपिण्डान्तर्भूतस्यान्तःस्थितस्य वा कस्यचन (ब्रह्मण आत्मनो वा) मूलकारणत्वस्वीकारे युक्तिः प्रदर्शिता। चिन्तनस्यातिगहनत्वे जाते गुणगुणिभावविहीनस्याद्वैतस्य कस्यचन चैतन्यमयस्य न तु चैतन्यवतो मूलकारणत्वमिति मतं राद्धान्तितम्। उपनिषत्कालानन्तरं विविधदर्शनेषु सृष्टिविषयकं चिन्तनं समायातम्। तत्र दर्शनं तावत् प्रथमं वैदिकावैदिकभेदेन द्विधा विभक्तम्। वैदिकेषु अन्यतमदर्शने न्यायवैशेषिके। तत्र प्रायः परस्परमेकेन स्वीकृतस्य मतस्यान्येन स्वीकृतत्वात् तद्दर्शनद्वयं समानतन्त्रत्वेन सम्मन्यते । पौरस्त्यदर्शनक्षेत्रे तावद् एताभ्यां द्वाभ्यां दर्शनाभ्यां परमाणुवादस्योररीकृतत्वाद् एते द्वे परमाणुवादिदर्शन उच्येते । न्यायवैशेषिकदर्शनसम्मतास्य जगत उत्पत्तिप्रक्रिया परमाणुवादे आधृता वर्तते। जगति तावदस्माभिरनुभूयमानेषु दृश्यमानेषु वा कतिचन वस्तूनि उत्पद्यमानानि नश्यन्ति च दृश्यन्ते। तत्र तादृशानि वस्तूनि अनेकैरवयवैर्निर्मितानि भवन्ति, तानि च वस्तूनि तेषामवयवानां विभजनेन नाशेन वा नश्यन्ति। यथा प्रत्यक्षभूतस्य कस्यचन पटस्य कस्यचन घटस्य वा क्रमशोऽवयवौ तन्तुकपालौ। तेषां विभजनेन नाशेन वा पटघटौ नश्यतः। तथैव तन्तुकपालौ च नश्यन्तौ वयं पश्यामः। अनेन ज्ञायते तावदवयवविभजनेन नाशेन वा निर्मितं वस्तु नश्यति। एतावतान्यच्च पुष्टीभवति यत् तन्तुकपालयोश्चावयवानां विभजने नाशे वा तन्तुकपालावपि नश्यतः। अनया रीत्या जातस्य वस्तुनः (अवयविनः) पुनः अवयवाः, तेषाञ्च पुनः अवयवा इति धाराग्रे गच्छति। इयञ्च धारा कुत्रचनैकत्र विश्राम्यति। यत्र विश्रामः स एव परमाणुरिति न्यायवैशेषिकदर्शनराद्धान्तः। स च परमाणुः कीदृशः कियत्परिमाणकः? इत्यत्रोच्यते- जालान्तरगते भानौ यत्सूक्ष्मं दृश्यते रजः। तस्य षष्ठतमो भागः परमाणुः स उच्यते। स च परमाणुः पार्थिव-जलीय-तैजस-वायवीयभेदाच्चतुर्विधः। न्यायवैशेषिक दर्शनयोराकाश–कालादीनां पृथिव्यादिपरमाणूनाञ्च नित्यत्वं मन्यते। पृथिव्यादिचतुर्णां कार्यद्रव्याणां तद्गतगुण कर्मादीनाञ्चोत्पत्तिर्मन्यते। तत्र प्राणिनां भोगभूतये महेश्वरस्य सिसृक्षायां सत्यां सर्वात्मगत वृत्तिलब्धादृष्टापेक्षेभ्यस्तत्संयोगेभ्यो वायवीयपरमाणुषु कर्म्म जायते । तेषां परस्परसंयोगेभ्यो द्व्यणुकादिक्रमेण महान् वायुरुत्पद्यते। ततस्तस्मिन्नेव वायौ जलीयपरमाणुतस्तयैव रीत्या जलमुत्पद्यते। ततश्च तस्मिन्नेव जले क्रमशः पार्थिवेभ्यस्तैजसेभ्यश्च परमाणुभ्यो महती पृथिवी महान् तेजोराशिश्च जायेत इति।

# स्वामी विवेकानन्दः

**असम राज्य भारत लवर्षस्य प्रकाण्ड विद्वान पण्डित नारदोपाध्याय महाभागः**

**प्रथम सोपान**

'परेषां दोषान् नावलोकयन् यदि भवान् स्वकीयं चरित्रं प्रति अवधानं दत्वा स्वचरित्रं संशोधयेत्, स्वजीवनचर्यां च पवित्रीकुर्यात् तर्हि स्वयं भवान्, भवत्परिवारः, समाजः, राष्ट्रम्, सर्वक्षेत्रादयश्च पूर्णतः संशोधनं? प्राप्नुयुः ' इति स्वामि विवेकानन्देन मानव मात्रस्य कृते प्रदत्तं कर्मरहस्यस्य किञ्चन प्रबोधनम् ।

स्वामी विवेकेनन्दः गतशताब्देः प्रमुखासु आध्यात्मिकविभूतिषु अन्यतमः आसीत् । सः मानवताम् आध्यात्मिकज्योतिषा परमसम्पन्नतां कृत-वान् । दक्षिणेश्वर-शक्ति- ब्रह्मोपासकस्य पर-महंस-रामकृष्णस्य चरणकृपा ज्योतिषा अविद्यान्धकारं विनश्य स्वामी विवेकानन्दः आत्मगत शक्ति चेतना द्वारा मानवकल्याणस्य पन्थानं प्रशस्तं कृतवान् आसीत्। न केवलं भारते हि, अपितु अमेरिका, यूरोप् तथा विश्वस्य अन्येषु भागेषु स्थिताः जनाः तस्य महाभागस्य आत्म ज्योतिषां रसास्वादनं कृत्वा धन्याः जाताः आसन् । विवेकानन्दः मानवमात्राय सेवायाः शिक्षां प्रादात् । सः उक्तवान् - ' प्रत्येकं स्त्रीपुरुषाः सर्वे ईश्वरसमानाः हि द्रष्टव्याः, एवञ्चेत् मनुष्यः धन्यतां गच्छेत्। कोऽपि मनुष्यः कस्यापि साहाय्यं कर्तुम् अक्षमः, अतः तस्य तु केवलं सेवाकार्यस्य हि अधिकारः वर्तते। ईश्वरानुग्रहात् यदि तस्य भगवतः कस्यचन अपत्यस्य सेवां कश्चन मनुष्यः कुर्यात् तर्हि सः धन्यार्हः कथ्यते। सेवा तु मनुष्यस्य कृते भगवत्पूजा समाना हि वर्तते ' इति । स्वामी विदेशं गत्वा जनेभ्यः अध्यात्म ज्ञानस्य दानं कृतवान् । सः ब्रह्मविद्यायाः प्रसारणं कृत्वा विदेशिचिन्तनपद्धतेरुपरि भारतीयाध्यात्म ज्ञानस्य विजयध्वजां स्थापितवान् । इंग्लैण्डादि देशेषु तस्य विशिष्टं स्वागतं जातम्, तत्रत्याः एतं बुद्ध-ईसादिरूपेण दृष्टवन्तः आसन् । विवेकानन्दः आजीवनम् अद्वैत-भगवत्तत्त्वस्य प्रचारं कृतवानासीत् । सः स्वसाधनासीमायां स्वस्य कृते परमभक्तः आसीत् ; शिष्यः, प्रेमी, अनुयायी इत्यादीन् आत्मज्ञानिसाधुत्वेन पश्यति स्म । तस्य प्रबोधनं यत् मानवता सत्यप्रकाशे हि विकासिता भवितुमर्हतीति । साहसपूर्वकं सत्यवचनं हि वक्तव्यम्, सत्यं सनातनं वर्तते, आत्मा सत्यरूपः, सत्यं सर्वदा प्रकाशं दद्यात्, चेतनाम् एवं स्फुर्तिं च सृजेत् । स्वामी मानवतायाः महान् आदर्शः आसीत् । सः आत्म-मानवः, निष्पक्षः च आसीदित्यत्र नास्ति संशीतिः इति, शम् ।

**द्वितीय सोपान**

**शिकागो धर्म सम्मेलन,1893 में दिया गया भाषण?**

# असमराज्योद्भवा जगद्गुरवः श्रीमन्तः शंकरदेवाः

अनादिकालतो हि भारतवर्षान्तर्गतम् असमराज्यं सनातनधर्मसंस्कृतिमठमन्दिरादिभिः परिपूर्णम् ऐतिहासिकं पूवीत्तरराज्यं वर्तते, यच्च सूयीदयराज्यम् आख्यायते । नानाजात्युपजातिजनजातिभाषासंस्कृत्युपेतमिदं राज्यं विभिन्नैः वर्णरञ्जितकुसुमैः सुशोभितं पुष्पवाटिकावत् मनोरमम् अवलोक्यमानमस्ति पूर्वत एव ।

मध्यकालिकयुगे अखिलभारते हि तत्कालिकाः जनाः अज्ञानान्धकारे नि-मज्जिताः आसन् । अतः तत्समये कबीरः, वल्लभाचार्यः, चैतन्यमहाप्रभुः, इत्यादयः नानामहापुरुषाः देशे तत्र तत्र आविर्भूय जनान् ज्ञानप्रकाशेन संस्कारितवन्तः । तत्स-मये 1449 ख्रिष्टाब्दे असमराज्यस्य वरदोवानामके स्थाने अपि आश्विनशुक्लपक्ष-मासस्य विजयादशमीतिथौ, सत्यसन्ध्या-कुसुम्बरभूञयोः औरसे श्रीशङ्करदेवस्य जन्म अभूत् । परन्तु दिनत्रयानन्तरं हि तस्य जननी सत्यसन्ध्या स्वर्गवासिनी जाता, अतः तस्य प्रतिपालनं पितामह्या खेरसूत्या निवीढम् ।

बाल्यवयसि हि शङ्करदेवेन नानालौकिकं कार्यं प्रदर्शितम् - शयनावस्थायां तस्य शिरसि महान् सर्पः कश्चन फणं प्रसार्य अतिष्ठत, तं सहजतया निगृहीतवान्, कदाचित् एकस्य महतः वृषभस्यापि विषाणद्वयं दृढं गृहीत्वा तेन सः वशीकृतः, एवं कदाचित् महानद-ब्रह्मपुत्रं सन्तरित्वा हि अपरतीरं प्राप्नोत् । इत्थं तस्य बालचरित्रं विचित्रपूर्णं साहसपूर्णञ्च आसीत् ।

महेन्द्रकन्दलिमहाभागः तस्य गुरुरासीत् । एवं यथाकाले शिक्षां समाप्य 1392 शके प्रथमपत्नीत्वेन सूर्यावत्याः पाणिग्रहणं कृतवान्, मनुनामिकाम् एकां पुत्रीं प्रसूय सापि दिवङ्गता । ततः शङ्करदेवः तीर्थभ्रमणाय प्रस्थितवान् ; नानातीर्थस्थलं प्राट्य द्वादशवर्षानन्तरं स्वस्थानं प्रत्यागतवान् । तस्य द्वितीयविवाहः अपि सम्पन्नः, द्वितीयपत्नी कालिन्दी इत्यासीत् । ततः शङ्करदेवेन एकशरणवैष्णवधर्मस्य प्रभूतं प्रसारणं कृतम्, सामान्याः जनाः अनेन धर्मेण उपकृताः, नितरां सुसंस्कृताः जाताः सन्ति अद्यापि । 'भाउना', 'सत्र' इत्यादिकं तस्य महाभागस्य हि सृष्टिभूतम् । श्रीमाधवदेवः तस्य शिष्येषु श्रेष्ठः । उभावपि सम्मिल्य असमस्य वातावरणं धर्माचारसंस्कारादिभिः पवित्रीकृतवन्तौ आस्ताम् ।

नामघोषायां कथितमस्ति -

**'हरि नाम प्रेमरस अमृत निधिक बान्धि**
**गुप्त करि थैला देवगने ।**
**दयालु शंकरे पाइ तुलि मुद भाङ्गि दिला**
**सुखे पान करे सर्वजने ॥' इति ।**

शंकरदेवः न केवलं वैष्णधर्मप्रचारकः एव, अपितु शास्त्रेषु विदग्धपण्डितः, समाजसंस्कारकः, महांल्लेखकः, कविः, नाट्यकारः, अभिनेता, सङ्गितज्ञः, चित्रका-रः चापि आसीत् । 120 वर्षाणि महापुरुषीयजीवनं सुन्दरतया समाप्य इतः वैकुण्ठं श्रितवानासीत सुभगः श्रीशङ्करदेवः यम् आदर्शं प्रदर्श्य संस्थाप्य च असमीयासमाजाय तत्प्रदत्तवान्, तत्कृते बृहदसमीयाजातिः तत्पूरतः चिरकृतज्ञा वर्तते इति, शम् ।

**- नारदोपाध्यायः ।**

**रम्या रामायणी कथा**

मर्यादा पुरुषोत्तम श्री राम की जीवन गाथा

**॥श्री राम कथा॥**

**श्रीरामचन्द्रचरणौ मनसा स्मारामि**
**श्रीरामचन्द्रचरणौ वचसा गृणामि।**
**श्रीरामचन्द्रचरणौ शिरसा नमामि**
**श्रीरामचन्द्राचरणौ शरणं प्रपद्ये।**

अथ सुग्रीवमहाभागेन श्रीराममुक्तम्,हे प्रभो! किष्किन्धाराज्यं नृपं विना अवलोक्य तत्र मन्त्रिणहठपूर्वकं किष्किन्धाराज्यसिंहासने मदभिषेकं नृपस्यरूपे कृतवन्तः। कालान्तरे यदा ज्येष्ठभ्रातृबाली तं राक्षसं वधयित्वा किष्किन्धानगरमागत्य मां राज्यसिंहसाने समुपविश्य दृष्ट्वा क्रोधवशीभूत्वा यं चिन्तनमकरोत् यत्, किष्किन्धाराज्यस्य लोलुपताकारणाद् तद्गुहाद्वारमवरुद्धं कृत्वा मया गुहाद्वारं शिलया रुद्धं कृतम्। अनेन बाली तत्रैव विनष्टं भविष्यति। मद्विचारेण सः एतादृशं विचार्य कृत्वा मां प्रति व्यर्थे शत्रुभावं धारणं कृतवान्। हे राघव! सः बाली शत्रुसमं मां ज्ञात्वा सभामध्ये मत्ताडनमकरोत। मद्भार्यामपि बलपूर्वकं स्वान्तःपुरमवरुद्ध्य मत्सहितं जामवन्तहनुमानादिमन्त्रिणं राज्याद्बहिर्कृतवान्। हे नाथ! तदा यावदेव तद्भयात् प्राणरक्षार्थं सर्वत्र मित्रैः सह धावन् आसीत्। हे भगवन्! अत्र सो महर्षिमतङ्गमहाभागस्य शापकारणाद् नागच्छत्। एतछ्रुत्वा श्रीरघुनाथमहाभागस्य हृदये बहुदुःखं जातम्। श्रीरामः सुग्रीवमहाभागस्य हृदये भयं दूरीकुर्वन् कथितवान्, हे वानरराज! मद्वचनं श्रुणु, केवलमेकेन बाणादेव दुष्टबालीं वधं करिष्यामि,यदि सः ब्रह्मदेवं वा रुद्रमहाभागं समीप-मपि सः गमिष्यति तदपि तत्प्राणरक्षा भवितुं नर्हति।

**'सुनु सुग्रीव मारिहउँ बालिहि एकहिं बान।**
**ब्रह्म रुद्र सरनागत गएँ न उबरिहिं प्रान?' इति।**

हे सुग्रीव! अधुना आवां मित्रे स्वः। मद्विचारेण ये जनाः मित्रस्य दुःखं संदृश्य दुःखिनो न भवन्ति तदा तद्दर्शनमात्रेण महत्पातकं भवति। यः स्वगिरिसमं दुःखं रजकणतुल्यं तथा स्व-मित्रस्य रजतुल्यं दुःखं गिरिसमं मत्वा तद्दूरीकर्तुं भगीरथं प्रयासं क-रोति, स एव यथार्थमित्रं भवतीति मन्ये।

**-क्रमशः**

**आचार्य अरविंद पांडेय**

# चतुर्थस्थाने बुद्धेः विचारः उक्तोऽस्ति, अर्थात् पदवृद्धिः-अधिकारवृद्धिः-धनवृद्धिः-यशोवृद्धिः

स्त्रिया अथवा पुरुषेन स्वजनसमुदायं परित्यज्य अन्यस्थाने प्रस्थानं क्रियते, किञ्चित् कालं यावत् तयोः सङ्केतः न लभ्यते, पत्रमपि नागच्छेत् तर्हि गृहजनाः अतीव दुःखिता भवेयुः। तदा चिन्तामग्नाः ते ज्योतिषसमीपं गत्वा तेषां नाम पलायितजनानां क्षेमवार्तां पृच्छन्ति। एवंरूपप्रश्नः आगमनप्रश्नः इत्युच्यते। एतस्मिन् विषये पण्डितरुद्रमणिः प्रश्नशिरोमणिग्रन्थे एवमकथयत् - तनुपतिस्त नुतुर्यगतेन चेन्मुत्थसिलं विदधाति तथांगपः। कुरिल केन्द्रेगत स्तनुमीक्षते स सुखमेति तदा पथिको ध्रुवम्। अर्थात् लग्नेशः यदि लग्नस्य अथवा चतुर्थग्रहेण सह इत्थसालं करोति अथवा वक्रीलग्नेशः केन्द्रेस्थित्वा लग्नं पश्यति तर्हि पथिकः सुखपूर्वकरूपेण आगच्छेत्। अस्मिन् श्लोके केन्द्रस्थानम् अतिमुख्यमिति मन्यन्ते। अस्य विवरणम् आचार्यवराहमिहिरः एवमवदत् - लग्नात् च्युतिः, चतुर्थभावात् बुद्धिः दशमभावात् प्रवास एवं सप्तमभावात् निवृत्तेः विचारः करणीयः। प्रश्नसमये एतेषु भावेषु स्थितग्रहाणामनुसारेण समस्त शुभाशुभफलं वक्तव्यम्। चतुर्थभावे शुभग्रहस्थिते प्रवासी स्वगृहम् आगतवानिति वक्तव्यम् - च्युतिर्लग्नाज्ज्ञेया हिबुकगृहतो वृद्धिरुदिताप्रवासः स्यान्मध्याद्भवति विनिवृत्तिः स्मरगृहात्। गृहैरेतत्प्रश्नोदय समयगैवच्यिमखिलं प्रविष्टः स्वं गेहं हिबुकगृहगे प्रोषितपुमान्। अस्मिन् श्लोके लग्नभावात् च्युतेः विचारः कथितः। अर्थात् अधिकार-त्याग-पदहानि-स्थानान्तरण-वर्षागमन एवं बन्धविमोचनम् इत्यादयः प्रश्नच्युतेः मूलकानि भवन्ति। चतुर्थस्थाने बुद्धेः विचारः उक्तोऽस्ति। अर्थात् पदवृद्धिः-अधिकारवृद्धिः-धनवृद्धिः-यशोवृद्धिः एवं न्यायस्थानम् अथवा मित्रं वा दम्पतिलाभाः इत्यादयः वृद्धिमूलकप्रश्नाः भवन्ति। दशमभावात् प्रवासविचारः करणीयः अर्थात् यात्रा, विदेशगमन, यात्रायां सुख.दुःख एवं लाभ-हानि इत्यादयः प्रश्नाः प्रवासमूलकाः भवन्ति। सप्तमभावात् निवृत्तेः विचारः करणीयः। अर्थात् यात्रातः पुनरागमनं, रोगान्मुक्तिः, मृत्यु-कष्टनिवृत्तिः तथा तस्करित अपगतवस्तुप्रापणम् इत्यादयः प्रश्नाः निवृत्ति-मूलकाः भवन्ति। एवंरूपेण तस्य ग्रन्थस्य व्याख्याकारः "डॉ. शुकदेवचतुर्वेदी" कथयति - तनुधनसहजस्थाः सर्वखेटा यदि स्युस्तदुपथिक उपैति स्युर्यदा तत्र सौम्याः। हृतगतनरवस्त्वाप्तिर्यदा जीवशुक्रौ द्रुततरमुपयात्येव स्वदेशे हि पान्थः। अर्थात् लग्नात् द्वितीये, तृतीयभावेषु सर्वग्रहाः स्थिताः चेत् पथिकाः आगमिष्यन्ति। यद्युक्तभावेषु केवलं शुभग्रह एव भवेत्तर्हि नष्टवस्तुनः प्राप्तिः तथा अपगत वस्तुनः आगमनं भवेत्। यदि केवलं बृहस्पतिशुक्रौ एव पूर्वोक्तभावेषु स्थितौ तर्हि पथिकोऽतिशीघ्रं स्वगृहं प्राप्स्यतीति वक्तव्यम्। परन्तु अस्मिन् श्लोके लग्नात् द्वितीये, तृतीय भावेषु प्रवासीजनागमनाय सर्वेषां ग्रहाणां स्थितिः अनिवार्या नास्तीति अस्माकं विचारः भवति। परन्तु अस्माभिः ज्ञायते यत् लग्नात् द्वितीये, तृतीयभावेषु त्रिचतुर्ग्रहाः स्थिता चेदपि प्रवासस्य आगमनसूचना लभत्येव। यदि सर्वग्रहाणां स्थित्यर्थमङ्गीक्रियते तर्हि श्लोकस्य शेषभागः विरुद्धार्थक एव भवेत्। पण्डितरुद्रमणिः स्पष्टयति यत् लग्नस्य द्वितीये, तृतीयभावेषु केवलबृहस्पतिशुक्रस्थितिरेव यात्राकरणजनान् गृहे स्थापयति नाम नैवगमयतीत्यर्थः। एतेषु स्थानेषु शुभग्रह स्थितश्चेत् नष्टवस्तुनः प्राप्तिः तथा पलायितस्य आगमनं सम्भाव्यते। बादरायणः कथयति यत् लग्नात् द्वितीय-तृतीयभावेषु ग्रहस्थितश्चेदपि यात्री पुनरागमनशीलो भवेत्। केचन ग्रहाः सन्त्यपि शीघ्रगमनमेव सम्भाव्यते। लग्नाद् द्वितीयभवनं तृतीयं वा ग्रहेण संयुक्तम्। दूरगतस्यागमनं प्रवृत्तिमथवा विनिर्दिशति। बादरायण मतानुसारेण लग्नात् द्वितीयतृतीयभावेषु स्थितः ग्रहः अर्थात् पाप अथवा शुभग्रहश्चेत् प्रवासजनागमनसूचना दीयते। वराहमिहिरमतानुसारेण एवं भवति - लग्नतः सहजपुत्रवित्तगा दूरगागमनशंसितो ग्रहाः। नष्टलम्भनकराः शुभग्रहाः शीघ्रमागमकरौ तु मन्त्रिणौ। लग्नात् तृतीये, पञ्चमे एवं द्वितीयस्थानेषु ग्रहस्थिते तर्हि प्रवासीजनागमनमभिलक्ष्यते। एतेषु स्थानेषु स्थित शुभग्रहः नष्टप्रदार्थस्य लाभं करोति तथैव शुक्रश्चेत् शीघ्रागमनं भवेत्। अस्य श्लोकस्य व्याख्याकरणसमये "डॉ. शुकदेवचतुर्वेदीमहाभागः" कथयति यत् - एतेषु स्थानेषु शुभग्रहभवेत्तर्हि गृहात् पलायिताः, अदृश्यजाताः जीवाः गृहं शीघ्रमागमिष्यन्ति। निर्जीवपदार्थाः अस्मिन् योगे नैव लभ्यन्ते एव। तेषां सर्वानुसारेण एतेषु योगेषु कुटुम्बस्य, भ्रातुः, बन्धु एवं सन्तानस्य प्रीतिकारणेन व्यक्तिः स्वदेशानयनप्रभावशालीं भूमिकां पोषयति। आर्यासप्ततिग्रन्थे एवं कथितम् - दुश्चिक्यधनसमेतौ गुरुशुक्रावागमं न्नृणाम्। बन्धूपगतावेतौ गृहप्रवेशं क्षणात्कुरुतः। प्रश्नलग्नात् तृतीये तथा द्वितीयभावेषु गुरुशुक्रौ भवेताम् तदा परदेशीजनागमनं सम्पद्यते। यदि गुरुशुक्रौ चतुर्थभावे स्थितौ तर्हि परदेशीजनाः अतिशीघ्रमेव गृहं प्राप्स्यन्तीति वक्तव्यम्।

# यतो हि काव्य शास्त्र दर्शन शास्त्रयोः सम्बन्धो नातिदूरं वर्तते

वाङ्मयस्य प्रौढप्रयुक्तौ विषयगाम्भीर्यं सम्यग् बोधयितुं नैकविधाः कथनकला अवलम्ब्यन्ते। तासु भासिकसौष्ठवसर्जनमन्यतमं मन्यते। विकीर्णरूपेण प्रतिविम्बितं वैशिष्ट्यमेतन्निगमागमयोः कतिचनग्रन्थेषु प्राप्यते। विशेषतो रसभरितेषु काव्येषु प्रयोक्तव्यानि काव्यतत्त्वानि दर्शनादीनां चिन्तनप्रधानग्रन्थानां विषय गौरवस्य सारल्येन प्रबोधनाय इतस्ततः प्रयुज्यन्ते। एतेषु तत्त्वेष्वलङ्कारः प्राचीनकाव्यसिद्धान्तस्य रूपेण समादृतो वर्तते। श्रीमद्भगवद्गीतायामपि का-तिचिदलङ्काराः समुल्लसन्तो दृश्यन्ते। गीता समन्ततो ब्रह्मविद्यायाःसारस्वरूपिणी भगवद्वाणी एवास्ति। एतन्नासत्यं यद् दिव्यवाणीयं बहुतो व्याख्यातुं शक्यत एव तदप्यत्र समायाता अलङ्कारा अस्याः काव्यात्मकमूल्यञ्च सुष्ठ प्रमाणयन्ति। तेष्वपि उपमालङ्कारचारुता काव्यप्रेमिणां चेतो रञ्जयितुमत्र परिस्फुरन्ती विलोक्यते। आलेखनेऽस्मिन् गीतायाः कतिचनश्लोकानुद्धृत्य तत्रोल्लसितस्योपमालङ्कारस्य सङगतिः संसाधिता वर्तते। कुत्रचिदुपमायाः भेदोप भेदाश्च सोदाहरणं निर्दिष्टाः सन्ति। दर्शन काव्य तत्त्वयोः समन्वयश्च सङ्क्षेपेण निरूपितः। गीता काव्यतत्त्वदृष्ट्यापि विवेच्याऽस्तीति सिद्धान्तं स्थिरीकृत्य निदर्शनप्रमाणस्वरूपेण सादृश्य मूलकालङ्कार सार– सिद्धस्योपमालङ्कारस्य विच्छित्तिरात्र प्रदर्शिता वर्तते।

प्रमुखाः शब्दाः उपमा, विच्छित्तिः, भावकः, प्रयुक्तिः, ब्रह्मज्ञानम्, उपमेयः, उपमानम्, साधारणधर्मः, वाचकशब्दः, श्रौती, आर्थी, प्रतीतिः, समुल्लसनम्, सोढा, क्षेत्री, प्रस्थानत्रयी, पराविद्या।

## विषयोपस्थापनम्

श्रीमद्भगवद्गीता ज्ञानगङ्गेव प्रवहति। विश्वसाहित्यसंकृतिदर्शनादिविषया गीतामेवानुसरन्तो दृश्यन्ते। भगवतो मुखपद्माद् विनिःसृतेयं वाणी स्वकर्मपरिपूर्तये सर्वान् सदैव प्रेरयति। गीताया महत्त्ववर्णनं न कदापि पारमेति। सहस्रशो गन्थेषु विविधैराधरैर्गीतायाः सानुशीलनं विषयप्रतिपादनं विहितमस्ति। गीतेयं काव्यशास्त्रसरण्यापि व्याख्यातुं शक्यते। यतो हि काव्यशास्त्रदर्शनशास्त्रयोः सम्बन्धो नातिदूरं वर्तते। गीताया धार्मिकसाहित्यस्य रूपेणापि सर्वत्रास्ति समादरः। अत्र विविधालङ्काराणां सौन्दर्यसौष्ठवं विलसदस्ति। तेषूपमालङ्कारस्य विच्छित्तिर्विशेषण सञ्चकास्ति। उपमालङ्कारस्य माध्यमाद् विहितेन विषयप्रतिपादनेन दार्शनिकार्थोऽपि भावकाभिरुचिं प्रतनुते। अत्र गीतायामुल्लसितस्योप-मालङ्कारस्य सोदाहरणं दिङ्निर्देशो विधीयते।

## उपमालङ्कारगौरवम्

उपमा सादृश्यमूलकोऽर्थलङ्कारोऽस्ति। अलङ्का-रसौन्दर्यस्य मूलाधारः सादृश्यं मन्यते। काव्यशास्त्रेषु सादृश्यमूलकालङ्कारा एव प्राधान्यं बिभ्रति। स्वतः सादृश्यत्वादुपमा सकलानां सादृश्य मूल्य कालङ्काराणां प्राणमयो मन्यते। अनेनैव कारणेन बहुभिः काव्यशास्त्रिभिरुपमा निखिलेष्वलङ्कारेषु प्रथमस्थाने निधापिता वर्तते। राजशेखर उपमामलङ्काराणां शिरोरत्नरूपं मनुते। रुय्यकः सकलानामलङ्काराणां बीजरूपं पश्यति। अप्पय दीक्षितेन चोपमायाः श्रेष्ठता संसाधिता वर्तते। वेदव्याकरणादिग्रन्थेषु चिराय प्रयुज्यमाना उपमा काव्यशास्त्रेऽन्यतमस्यार्थलङ्कारस्य रूपेण प्रसिद्धिमलभत। उपमायाः कीदृशं महत्त्वमस्तीति निर्णेतुं चित्रमीमांसाया ब्रह्मज्ञानादिवोपमाज्ञानात् इति वचनं प्रमाणसाधनं भवति। सकला लङ्कार प्रधानभूतस्योप मालङ्कारस्य गीतायामपि प्रयुक्तिरौचित्यपूर्णा सिद्ध्यति।

## उपमाभेदसङ्केतनम्

नाट्यशास्त्रकाराद् भरतादारभ्य जगन्नाथपर्यन्तमुपमाया भेदोपभेदाः प्रदर्शिताः सन्ति। न्यूनतोऽपि पञ्चभेदान् प्रदर्श्याधिकतमं पञ्चविंशत्यधिकशतं भेदा निर्दिष्टाः सन्ति। भरतेन पञ्च, दण्डिना पञ्चत्रिंशत्, उद्भटेन सप्तदश, रुद्रटेन त्रयः, मम्मटेन पञ्चविंशतिः, विश्वनाथेन सप्तविंशतिः, जगन्नाथेन पञ्चविशंत्यधिकशतं च भेदाः वर्णिताः सन्ति। जगन्नाथेनातिरिक्तं पञ्चत्रिंशद् भेदाश्च उल्लिखिता दृश्यन्ते। अनेनोपमाया यथार्थतः कति भेदा मन्तव्या इत्यत्र सन्देहो जिज्ञासा च समुद्भवतः। अत्र उद्भटस्य उपमाभेदप्रदर्शनं महत्त्वं बिभर्ति। अनेन पूर्णोपमालुप्तोपमयोर्नाम्ना भेदद्वयं सन्दर्शितम्। मम्मटोऽपि इदमेव मतं स्वीकृत्य पूर्णोपमायाः श्रौत्यार्धिनाम्ना पुनरुपभेदद्वयं दर्शयति। एतावता सरलनिष्कर्षोऽमेव यदुपमायाः प्रमुखौ द्वौ भेदौ– पूर्णोपमा लुप्तोपमा च। पूर्णोपमाया भूयोऽपि उपभेद्वयं गण्यते– श्रौती आर्थी च। तेषां दिनिर्देशोऽत्र क्रियते। उपमेयोपमान साधारण धर्मवाचक शब्दा यत्र स्पष्टं निर्दिश्यन्ते तत्र पूर्णोपमा भवति। चतुर्णामवयवानां स्पष्टत उल्लेखनात् पूर्णत्वाच्च पूर्णोपमेयमभिधीयते। पूर्णोपमाया द्वौ भेदौ यथा– श्रौती आर्थी च। यत्र उपमानोपमेयभावः 'यथा' 'इव' इत्यादिशब्दानां श्रवणादेवागम्यते तत्रोपमायाः श्रौतीभेदो भवति। यत्र 'तुल्य' 'समान' 'सदृश' इत्यादिशब्दानां प्रयोगेण साधर्म्यस्य प्रतीतिर्लभ्यते तत्रोपमाया आर्थीभेदो निरूप्यते। उपमाया अङ्गानां मध्ये एकस्य द्वयोस्त्रयाणां वा यत्र लोपो भवति तत्र लुप्तोपमा विभाति। मम्मटो विश्वनाथश्च लुप्तोप-माया अपि भेदान् निर्दिशतः। उपमेय लुप्तोप मानलुप्त वाचकलुप्त धर्मलुप्तादिभेदेनास्याः पञ्चदश प्रकाराः परिगणिताः सन्ति। प्रकृतप्रसङ्गे पूर्णोपमाम्, तस्या उपभेदद्वयम्, लुप्तोपमाञ्च समाश्रित्य श्रीमद्भगवद्गीताया आलङ्कारिकविच्छित्तिर्निरूप्यते। गीतायां स्थाने स्थाने पूर्णोपमाया विच्छित्तिर्विलसन्ती अस्ति। प्रथमं श्रौतीसौन्दर्यं प्रकाश्यते। जीर्णानां शरीराणामुपमेयस्वरूपेण, जीर्णानां वाससामुप मानत्वेन, अपराणां नवीनानां स्वरूपग्रहणं साधारण (समान) धर्मस्य रूपेण, यथा– तथावाचकशब्दयोः प्रयुक्त्या चात्र पूर्णोपमायाः श्रौत्युपभेदः समुल्लसति। आपूर्यमाणमचलप्रतिष्ठं समुद्रमापः प्रविशन्ति यद्वद्। तद्वत्कामा यं प्रविशन्ति सर्वे स शान्तिमाप्नोति न कामकामी।।2।70

अत्र सम्पूर्णभोगपदार्थैर्विकारहीनः संयमी पुरुष उपमेयः, निखिलानां नदीनां जलेन परपूर्णाः सन्नपि अचलो विकाररहितो वा समुद्र उपमानम्, संयमिनः पुरुषस्य समुद्रस्य च अचलता (अविकारता) साधारणधर्मः, यद्वत्– तद्वत्वाचकशब्दौ विभान्तीति हेतोर्भेदोऽयं स्फुटीभवति।धूमेनाव्रियते वह्निर्यथादर्शो मलेन च। यथोल्बेनावृतो गर्भस्तथा तेनेदमावृतम्। अत्र बहुकामावृतमज्ञानं विवेको वा उपमेयो वर्तते। धूमेनावृतो वह्निः, मलेनावृत आदर्शः, उल्बेनावृतो गर्भश्चैक्यरूपेण उपमानमस्ति। उपमेय भूतस्याज्ञान स्यावरणमुपमानस्वरूपेषु वह्नौ धूमस्य, आदर्शे मलस्य, गर्भे चोल्बस्यावरणं च साधारणधर्मो वर्तते। यथा– तथावाचकशब्दौ प्रयुक्तौ स्तः।

**प्रेरणाश्रोत**

**जगदगुरू शंकराचार्य ज्योतिष्पीठ काशी पीठाधीश्वर ब्र.ली. स्वामी विद्यानंद सरस्वती जी महराज (मौनी जी), शाश्वतानन्द सरस्वती जी महाराज।**

**संरक्षक मण्डल**

**योग गुरू स्वामी आनन्द गिरि जी**
(बांध स्थित बड़े हनुमान जी )

**डॉ भगवत् शरण शुक्ल**
**प्रोफेसर**-व्याकरण विभाग-संस्कृतविद्या धर्मविज्ञान संकाय
काशी हिन्दू विश्वविद्यालय वाराणसी

**प्रमोद बंसल**
निदेशक-महारानी चाय, प्रयागराज

**सलाहकार**

**श्रीमती अनामिका चौधरी**
(सदस्य राज्य महिला आयोग)
**डा. पुष्पा पाल** (एमजीएम हास्पिटल)
**- सुनील सराफ**
(अवतार केमिस्ट)
**-पं. देवेन्द्र प्रसाद त्रिपाठी**
-एसो. **प्रो. डॉ. मुरली मनोहर द्विवेदी**
**-डॉ. शम्भुनाथ त्रिपाठी** (अंशुल)
**-डा. मोरार जी त्रिपाठी**
**-आचार्य कुशलदेव**
( प्रवक्ता गुरुकुल महाविद्यालय ततारपुर हापुड़।)
**-महेश जी कपूर**
**डा.** कृष्णानन्द पाण्डेय
**फादर** - थॉमस कुमार
**उपसम्पादक** - विनम्र शुक्ल
**विशेषवार्ताहरः**
डॉ प्रदीप्त कुमार नंदः

**प्रयागराज ( इलाहाबाद )**

**RNI No. : UPSAN/2018/76680**

स्वामी मुद्रकः प्रकाशकश्च **आनन्द नारायण शुक्ल** द्वारा रमा प्रिन्टिंग प्रेस, 53/25/1,ए बेली रोड, नया कटरा, प्रयागराज से मुद्रित एवं 1286बी/541बी नेहरू नगर मीरापुर, प्रयागराज से प्रकाशित।

मो.-9415633297

**संपादक-राकेश शर्मा**

**वैधानिक सूचनाः** आह्निक वार्ता पत्रम् से सम्बन्धित समस्त विवाद के निपटारे का क्षेत्र इलाहाबाद (प्रयागराज) न्यायालय होगा।